मध्याङ्गुलान्मेढ्रान्तरं षडङ्गुलं, ऊरुमूलान्तरमेकाङ्गुलमूरुमध्यान्तरं द्व्यर्धाङ्गुलं, जान्वन्तरं चतुरङ्गुलं, जङ्घयोर्मध्यं पञ्चाङ्गुलं, नलकान्तरं षडङ्गुलम् अक्षयोरन्तरं पञ्चाङ्गुलं, पार्ष्ण्यन्तरं चतुरङ्गुलं, तन्मध्यान्तरं षडङ्गुलम्, अङ्गुष्ठान्तरमष्टाङ्गुलं, शयनस्य तिर्यग्गतब्रह्मसूत्रस्य दक्षिणतो मुखं त्र्यङ्गुलं पादाङ्गुष्ठयोर्मध्यं विंशत्यङ्गुलं, पार्ष्ण्यन्तरं भागं, जान्वोरन्तरं चतुर्दशाङ्गुलं स्यात् । एवमुपमानं च लक्षयेत् ।

इति श्रीवैखानसागमे मरीचिप्रोक्ते द्वाविंशः पटलः ॥

---

अथ देवेशस्योत्तमदशतालवशान्मानं वक्ष्ये । त्रियवाधिकमेकाङ्गुलमुष्णीषं, केशान्तं त्र्यङ्गुलं, दृक्सूत्रं त्रियवाधिकचतुरङ्गुलं, तत्समं पुटान्तं, तत्समं हन्वन्तं, गलमर्धाङ्गुलं, हिक्का यवोनचतुरङ्गुलं, हिक्काया हृदयान्तं हृदयान्नाभ्यन्तं नाभेर्मेढ्रान्तं क्रमात्त्रियवाधिकत्रयोदशाङ्गुलं, मेढ्रादूर्वायामं त्रियवोनसप्तविंशत्यङ्गुलं, जानु त्रियवाधिकं चतुरङ्गुलं, जङ्घा चोरुसमायामा, पादं सत्रियवचतुरङ्गुलं, पादायामं सप्तदशाङ्गुलं, हिक्कासूत्रादधस्ताद्बाहुदीर्घं सप्तविंशत्यङ्गुलं, कूर्परं द्व्यङ्गुलं, प्रकोष्ठमेकविंशत्यङ्गुलं, तलं सप्ताङ्गुलं, तन्मध्यमाङ्गुलायामं षडर्धाङ्गुलं, तर्जनी यवाधिकपञ्चाङ्गुला, अनामिका तद्यवाधिका, अङ्गुष्ठं यवाधिकभागं, कनिष्ठाङ्गुलं तद्यवाधिकं स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## उत्तमदशतालविधिः ।

अथ प्रमाणं वक्ष्ये । उष्णीषात्पूर्वकेशान्तं नवाङ्गुलं, द्विपार्श्वयोस्तत्समं, पृष्ठकेशान्तं द्व्यङ्गुलं, (मुखस्य विस्तारं) चतुर्दशाङ्गुलं मुखं, द्विचत्वारिंशदङ्गुलं नाहं शिरसः, पृष्ठतःकर्णयोरन्तरं त्रयोदशाङ्गुलं, पूर्वतष्षड्विंशत्यङ्गुलं, शेषं कर्णयोस्स्थानं, भ्रुवोर्मध्यमेकाङ्गुलं, केशान्ताद् भ्रुवोर्मध्यं त्र्यङ्गुलं, (अष्टाङ्गुलार्धं तिर्यगुपक्षेपमक्षयामं?) मध्यमष्टार्धाङ्गुलं, ग्रीवाग्रविस्तारं नवार्धाङ्गुलं, ग्रीवामूलविस्तारं बाह्वोः पर्यन्तं चतुश्चत्वारिंशदङ्गुलं, वक्षोविशालं चतुर्विंशत्यङ्गुलं, हृदयविस्तारं विंशत्यङ्गुलं, स्तनयोरन्तरं चतुर्दशाङ्गुलं, (दशाङ्गुलं?) मध्योदरं षोडशाङ्गुलं, श्रोणिविस्तारमष्टादशाङ्गुलं, कटिविस्तारं विंशत्यङ्गुलम्, ऊरुमूलविशालं त्रियवाधिकं त्रयोदशाङ्गुलम्, ऊरुमध्यविस्तारमेकादशाङ्गुलं, जानुविस्तारं नवार्धाङ्गुलं, जङ्घामूलमष्टाङ्गुलं, जङ्घामध्यविस्तारं सप्ताङ्गुलं, नलकाविस्तारं सार्धचतुरङ्गुलम्, अक्षगुल्फान्तं पञ्चाङ्गुलं, पादविस्तारं सार्धपञ्चाङ्गुलं सार्धवेदाङ्गुलोत्सेधं, पार्ष्णिविस्तारं सार्धत्रिमात्रं, (पादाङ्गुलिविस्तारम्)अङ्गुष्ठायामं चतुरङ्गुलं, तर्जनी तद्यवाधिका,तद्यवोनं मध्यमाङ्गुलं, त्रिमात्रार्धानामिका, कनिष्ठिकाङ्गुलायामं त्रिमात्रं, कनिष्ठाद्यङ्गुष्ठान्तं क्रमात्सप्ताष्टाष्टार्धनवषोडशभिर्यवैरङ्गुलानां विस्तारं, (शेषं विवरं) बाहुमूलविस्तारं दशाङ्गुलं, बाहुमध्यं नवाङ्गुलं, कूर्परं सार्धसप्ताङ्गुलं, प्रकोष्ठमध्यर्धसप्ताङ्गुलं, मणिबन्धं चतुर्मात्रं, तलं सार्धषण्मात्रं,



I

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

रुद्राष्टनवसप्तषड्यवविपुलान्यङ्गुष्ठादिकनिष्ठान्तमङ्गुल्यग्राणि, तद्यवार्धहीनसप्तवेदेषुतुर्याग्नियवमङ्गुष्ठादिनखानां विशालं, द्वियवाधिकमायामं, द्विपर्वाङ्गुष्ठमन्यानि त्रिपर्वाणि, अङ्गुष्ठमूलपर्वार्धाधिकाङ्गुलं, द्व्यर्धाङ्गुलमग्रपर्व, तर्जनीमूलपर्व चतुर्दशयवं, मध्यपर्व त्रयोदशयवा, अग्रपर्व द्वादशयवं, मध्यमाङ्गुलिमूलपर्व अष्टादशयवं, मध्यपर्व षोडशयवा, अग्रपर्व सार्धपञ्चदशयवा, अनामिकामूलपर्व सार्धचतुर्दशयवा, मध्यपर्व सार्धत्रयोदशयवा, अग्रपर्व द्वादशयवाः, कनिष्ठाङ्गुलिमूलपर्व द्वादशयवा, मध्यपर्वैकादशयवा, अग्रपर्व दशयवा, अङ्गुलीनामग्रे द्वियवाधिकं नखाग्रं, पार्ष्णिहस्तघनं वेदाङ्गुलं, तन्मध्यघनं द्व्यर्धाङ्गुलमग्रमङ्गुलीवत्क्षीणं, शुकोदरघनं द्व्यर्धाङ्गुलं, मणिबन्धात्तदायामं सयवं भागं, शुकोदरविशालं द्वियवोनं त्र्यङ्गुलं, पार्ष्णिहस्ताविस्तारं द्वियवोनचतुरङ्गुलं, तस्याग्रे तर्जन्यादिकनिष्ठान्तानामङ्गुलीनां मूलतलं मांसलमर्धमात्रेण, शेषं तलं निम्नम्, अङ्गुष्ठतर्जनीमूलयोस्सार्धत्र्यङ्गुलम्, अङ्गुलीनामधोमूलसन्धिरङ्गुलम्, (एकाग्रो वा नीचार्धाङ्गुलं?) कनिष्ठिकादेशमूलात्तर्जनीमूलपार्श्वगा आयूरेखा, मध्यमाङ्गुल्यधो द्व्यङ्गुलं, तस्य षड्यवाधस्ताद्विद्यारेखा, तलमूलात्कराग्रान्तं ब्रह्मरेखा, दक्षिणे करतले चक्रशङ्खसमा रेखा भवेत्। उपक्षेपनिम्नं द्वियवम्, अन्तरावर्तं द्व्यङ्गुलम्, उपक्षेपाविशालमध्यर्धाङ्गुलं, त्रियवोन्नतं हस्तिमस्तकवद्विस्तीर्णमस्तकं सोन्नतमङ्गुलम्(?)।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

(भ्रूतलं) भ्रूश्चतुर्यवा सार्धाङ्गुलायामा सार्धैकयवविस्तारानतार्धमात्रान्तर्या वक्रपुच्छका चापवत्। भ्रूलता स्निग्धरोमसंचिता, द्व्यङ्गुलं नेत्रतारं, भ्रुवस्स्थलादर्धाधिकाङ्गुलायामे अक्षिणी, अक्षिमण्डलमूर्ध्वाधोवर्मसंछन्नमूर्ध्ववर्म द्वादशयवमधोवर्म चतुर्यवमेतयोर्योगं नयनसूत्रम्। ऊर्ध्ववर्मविस्तारं द्वियवम्, अक्षिमोचन(?)विस्तारमेकाङ्गुलम्, ऊर्ध्ववर्म द्वादशयवमधोवर्म चतुर्यवमूर्ध्ववर्मणा संस्पृशेत्। षड्यवं कृष्णमण्डलं, तस्योभयोः पार्श्वयोस्तदर्धाधिकायतौ शुक्लभागौ, कनीनिकाविस्तारायामं यवं, नेत्रान्तरक्तं यवार्धं, ज्योतिर्यवप्रमाणं, दृष्टिर्यूकमात्रोर्ध्ववर्मततं द्वियवमधोवर्मततं यवार्धकं, वर्मणो घनमर्धयवं, नवतिः पक्ष्मरोमाणि, शेषं पक्ष्म, नासिकाग्रमध्यमूलान्तं क्रमादष्टादशषड्यवविस्तृतं, नासिकाग्रमङ्गुलविस्तारं, गोजीमूलाग्रं द्व्यङ्गुलोच्छ्रयं, पुष्करमष्टयवोत्सेधं, तन्मूलविस्तारं द्वियवं, मध्यविस्तारं द्व्यर्धयवम्, अग्रविशालं त्रियवं, पुटस्रोतोऽङ्गुलं, तिर्यग्यवपञ्चकं पुटस्य बहलं, यवमात्रायतान्वितं निष्पावबीजसदृशं तिलपुष्पसमाकारम्। नासिकापुटसूत्रान्नासाग्रं द्वियवार्धलम्बितं, सार्धचतुर्यवं गोजीतटं द्वियवविस्तारं, द्विवक्रा चोत्तरपाली सार्धयवविस्तृता, त्रियवार्धततं सार्धयवेदाङ्गुलायतमुत्तरोष्ठमास्यतारं तदेव । चत्वारः पुरतो दन्तास्त्रियवायामविस्तृताः, तावन्तोऽधरदन्ता द्वियवार्धततायताः, चतुर्यवायते दंष्ट्रे सदंशमुकुलोपमे ऊर्ध्वे, अधोदंष्ट्रे अर्धयवाधिके, पुरोदन्ताद्यवार्धेनायता-



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

स्तत्समविस्ताराः पञ्चोपदंष्ट्रा द्विपार्श्वगा द्वात्रिंशद् दन्तसङ्ख्या। अधरोत्तरयोर्दन्तायामसमावन्तस्तदर्धो दन्तरोपणो (?) जिह्वा षडङ्गुलायामार्धविस्तारा, घृतजिह्वाङ्गुलं (बाहु ?) कर्णरन्ध्रं कलाङ्गुलं षडङ्गुलायतं, तालुविस्तीर्णं त्र्यङ्गुलमास्यं नवयवान्तरं द्विगुणायतं षड्यवार्धमुत्सेधं, पालिका रक्ता, भागं ततमायामं द्विगुणम्, ओष्ठाधस्ताच्चिबुका सार्धाष्टयवं, हनुस्तत्समं तस्माद्धनुचक्रं साद्वियवं, तदुन्नतं रुद्राक्षियवं, चिबुकं निम्नगं (?) हनोर्गलं गलात्कण्ठमङ्गुलार्धं, गलरेखाध्यर्धकलायामा चापसन्निभा, कर्णबन्धाद्धनोर्मध्यं दशाङ्गुलं, तस्माच्चतुष्कलं सृक्का, नेत्रादधस्तादपाङ्गनेत्रमङ्गुलम्, अपाङ्गात्कर्णमूलं षडङ्गुलं, कर्णं कलाततं, नेत्रसूत्रसमं कर्णस्रोतः, तत्कर्णतुङ्गतार (?) कर्णनालमूलं कलासार्धयवं, कर्णावर्ती सार्धयवतता, पाली चतुर्यवा, कर्णपिप्पली चतुर्यवविस्तारा द्विगुणायता, पिञ्छूषी द्व्यङ्गुलायामा षड्यवविशाला कर्णावर्तीपिञ्छूषीचूलिका यवर्तुमनुतुर्ययवार्धविस्ताराः, पिञ्छूषीकर्णचूलिकाकर्णावर्त्युन्नतं चूल्यन्तावदत्यर्धयव मर्धाङ्गुलं (?) कर्णचूलीपिञ्छूषीकनीनिकायवान्तरं पिप्पलीपाल्योः पाली बालेन्दुसन्निभा यवनिष्पावसदृशा, पिप्पली षड्यवायता चतुर्यवविशाला, स्रोतोऽधो नेत्रसूत्रात्पिञ्छूष्यधः कर्णनालं मात्रार्धघनयुक्तं, नालौ पूर्वापरौ विवरं षड्यवमधोनाहं मालं स्यात् । कण्ठमूलादधो वपुः कार्यं,



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

कृकाटी सार्धाङ्गुलनता तस्यापरं यवं भागं (?) तद् ग्रीवायामं तत्रार्धाङ्गुलं तारं द्वादशाङ्गुलं तं स्कन्धयोस्समे (?) कर्णबन्धादध-स्स्कन्धसन्धिस्सार्धषडङ्गुलं, सप्ताङ्गुलौ स्कन्धौ शोभान्वितौ, हिक्कासूत्रा-त्स्कन्धसन्ध्युच्चं चतुरङ्गुलं, तन्मध्येऽध्यर्धाङ्गुलं जत्रु बाहुशिरस्सन्धिरंसा-न्तस्स्कन्धमूलतो नवाङ्गुलं द्वियवं, तस्माद् द्वियवं षडङ्गुलं बाहुशिरो जत्रु-सहितं कूर्परांसं पञ्चाङ्गुलायतं त्र्यङ्गुलायतमुत्क्षेपं समौ मुण्डितौ (?) भुजौ समनुन्नं मापयेदेवं नीत्वा भुजं नयेत् । कण्ठाधस्तात्ककुद्भागायताष्टको-लकं(?) ककुदः कटिसन्ध्यन्तं वंशं विंशतिर्भागाधिका तत्समं ककुदोऽ-धस्तात् षड्भागे कक्षोडरान्तरं(?) कक्षाधस्ताद्बाहुपर्यन्तं द्वियवं नवाङ्गुलं, स्कन्धसन्धेरधस्तादंसपीठं सार्धेन्द्रियाङ्गुलं, तस्माद् द्वियवाङ्गुले अंसफलके स्तनसूत्रसमे, तत्रान्तरयोर्दशाङ्गुलं ककुद्, धर....त्रिमात्रतारं सप्ताङ्गुलं तद्वक्षसो मांसलं तयोस्सन्धिवंशतारं कलानतं वंशपार्श्वे चांसफलकाया अधो नवाङ्गुलं, बृहत्योस्स्तनान्तरं वंशात्सुप्रतिष्ठाकलं तयोर्बृहती स्त-नयोर्मध्यं सप्तदशाङ्गुलं घनं बृहत्या कटिसन्ध्यन्तरं मध्यं सप्ताङ्गुलायतं तद्वनं स्याच्चतुर्भागं तदधोऽङ्गुलाधिकं कटि सार्धमुखं सार्धाङ्गुलं खण्ड-कान्तं खण्डस्य पुरस्तात्पायुर्भागाङ्गुलं सार्धधृतिमात्रं कटिबन्धविशालं जघनस्य बहिःपृष्ठे वंशपार्श्वद्वयोः ककुन्दरं षडर्धाङ्गुलं विशालं निम्नौ ककुन्दरस्यान्तं ४यङ्गुलं बिन्दुखण्डकयोस्तिर्यक्कटिर्वेदार्धमात्रिका खण्डं



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

द्वयङ्गुलं तारं सार्धतुर्याङ्गुलं स्फिगारम्भतारं नवाङ्गुलं सुवृत्तं कण्ठः कम्बुसमो वृत्तो द्विरेखावृतोऽधस्तान्नाडिकाधस्सद्वादशयवं कक्षाया हिक्कान्तं तावत् स्तनं कक्षादष्टाङ्गुलं षडङ्गुलं नम्रमुरः हृद् द्वियवाधिकं हृदयात्स्तनपीठतुङ्गमर्धाङ्गुलं कक्षाधारलम्बमत्युक्तं यवकोलकं स्तनपीठस्योन्नतिः कक्षस्याङ्गुलं तत्पुरस्तान्मुखं विप्राङ्गुलं यवं वृत्तं स्तनं यवोन्नतं स्तनाक्षं द्वियवतारं तदधस्ताद् द्वयङ्गुलं स्तनं हिक्का द्वयङ्गुलं निम्नं जत्रुरेखा द्वयङ्गुलं नाभिर्दक्षिणावर्ता षड्यवनिम्नायतेन्द्रियाङ्गुला नाभिः श्रोणिपार्श्वे त्रिकलाङ्गुलाद् द्वयङ्गुलोर्ध्वकटिश्रोण्याश्शेषं मेढ्रपीठं सार्धपञ्चाङ्गुलं लिङ्गायतं तारं द्विमात्रं मुष्कलम्बं तुर्याधाङ्गुलं तत्समविस्तारं वृषाननसदृशं मेढ्रं रुद्राक्षाङ्गुलं प्रतिष्ठाङ्गुलं द्वियवं जानुमण्डलविष्कम्भं घनं द्व्यर्धमात्रं पार्श्वबन्धं तुर्याङ्गुलं पृष्ठाज्जानु त्रिमात्रार्धयवविस्तारान्वितं पृष्ठजं कोलकं मध्यभागं शेषं पार्श्वयोरपि जान्वन्तादिन्द्रवस्त्यन्ते (?) तालं मत्स्यवदुन्नतं पृष्ठजङ्घाश्रितं मत्स्यपार्ष्णी द्वयङ्गुलविस्तारं तनुकपृष्ठपार्श्वयोरन्तरं तद्बहिर्गते अक्षगुल्फयोस्तुङ्गं मनुपङ्क्तियवैर्विपुलं क्रमेणाष्टादशद्विर्विंशतियवं प्रतिष्ठार्धाङ्गुलं पार्ष्णितारं तत्तुङ्गं शराङ्गुलं सार्धं प्रपदतुङ्गमङ्गुष्ठद्वयङ्गुलघनं शेषाणि विस्तारसमतुङ्गान्यष्टयवविस्तारादैर्घ्या नखमुखपार्श्वे द्वयोस्तुर्ययवं नीत्वा नखं नयेत्। चतुरर्धचतुस्सार्धाग्न्यग्नियवैरश्विसार्ध (मध्यर्ध)यवैः क्रमान्नखानां



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

विस्तारं, तर्जन्यादिकनिष्ठान्तं त्रियवं तदर्धार्धेन नखायतास्तर्जन्यङ्गुष्ठ-योरन्तरं चतुर्यवं, पर्वद्वयमङ्गुष्ठमन्यानि त्रिपर्वाणि, स्वतारसदृशमग्रे पर्वान्तं यवाधिकमङ्गुष्ठपर्वमूलाग्रं शेषाङ्गुलीनां द्वियवाधिक्यमेकैकं सर्वा ङ्गुलिमूलानां मूलतलं मांसलं पार्ष्णिभागे तलं पञ्चाङ्गुलायामं शेषं वर्तुलं कारयेत् । पादौ द्वौ चक्रशङ्खरेखासमन्वितौ । सर्वं सुव्यक्तं सुसंपूर्णं बेरं सलक्षणं चक्षुर्नन्दनमूर्ध्वकायमधःकायसममेव कृत्वा सर्वत्र विष्कम्भात्त्रिगुणं वृत्तं तत्परिमाणं स्यात् । सर्वेष्वङ्गेषु एकयवा-दिषड्यवान्तं हीनाधिक्यं न दोषाय भवति । तस्माद्यथोचितं युक्त्या कारयेदित्याह मरीचिः ।

इति श्रीवैखानसागमे मरीचिप्रोक्ते त्रयोत्रिंशः पटलः ॥

---



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# APPENDIX C.

## ॥ प्रतिमालक्षणानि[1] ॥

### विनायकः ।

स्थानकं वासनं वापि पद्मपीठे विशेषतः ।
स्वदन्तं दक्षिणे हस्ते वामहस्ते कपित्थकम् ॥
मोदकं गजहस्ते तु अङ्कुशं दक्षिणे परे ।
वामहस्ते तु पाशं वा नागं वाप्यक्षमालिका ॥
त्रिनेत्रं चतुर्भुजं ह्येवं दुकूलवसनान्वितम् ।
आभङ्गं समभङ्गं वा स्थानके तु प्रकल्पयेत् ॥
आसने त्वासनं चेत्तु वामपादं तु शाययेत् ।
वामेतरेणोरुमूर्ध्नि पादेनोत्कुटिकासनम् ॥

---

१. अत्र मुद्रितानां सर्वेषामपि लक्षणवचनानां तन्त्रशिल्पादिमूलग्रन्थेभ्यस्समुद्धृतत्वात्तेषु भूयिष्ठमपशब्दलिङ्गव्यत्ययादिकमुपलभ्यते । साकल्येन तद्विपरिवर्तनं दुश्शकमित्यर्थावबोधोपरोधकानां परमपशब्दानां साधुस्वरूपमधस्तादुपदर्श्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ईषद्वक्रतनुर्वामे कर्तव्यन्तु[1] विशेषतः ।
व्यालयज्ञोपवीती च किरीटमकुटान्वितः ॥

सर्वाभरणसंयुक्तो महाकायो महोदरः ।
एवं विनायकं[2] ख्यातं षण्मुखस्य ततश्शृणु ॥

(अंशुमद्भेदागमे ॥)

गजवक्त्रो गणाधीशो भूतरूपो महोदरः ।
नागयज्ञोपवीतस्तु घनपिण्डोरुजानुकः ॥

नीलनीररुहाभस्तु चतुर्दोर्दण्डमण्डितः ।
अवामवामावर्तेभहस्तः पद्मासने स्थितः ॥

स्वदन्तं परशुं कुर्यात्स्वदक्षिणकरद्वये ।
लड्डुकं चाक्षमालां च वामपाणावथोत्पलम् ॥

रक्तवस्त्रधरं वाथ श्यामाभं कनकप्रभम् ।
पीतकञ्चुकसंछन्नं किरीटमकुटोज्वलम् ॥

शुक्लयज्ञोपवीतं च सर्वाभरणभूषितम् ।
स्वं शृङ्गं वाङ्कुशं दक्षे वामे पाशं च लड्डुकम् ॥

स्थानकं[3] वासनं वाथ गणेशं कारयेत्ततः ।
त्रिभिर्विराजितं नेत्रैर्नेत्राभ्यामथवा द्विजाः ! ॥

---

१. 'कर्तव्यस्त्वि'ति भवितव्यम्। २. 'विनायकः ख्यात' इति भवितव्यम।
३. तिष्ठन्तमासीनं वेत्यर्थः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पद्मस्थं वापि पीठस्थं मूषिकस्थमथापिवा ।
इष्टासनस्थितो वापि प्रभादिपरिमण्डितः ॥
एवं स्यात्केवलो विघ्नराजश्शक्त्यान्वितोऽथवा ।
गणेशो भारतीश्रीभ्यां वामेऽवामे युतोऽथवा ॥
शक्त्यैकया युतो देवो यदि तल्लक्ष्म कथ्यते ।
आसीनमासने रत्नमकुटादिविभूषितम् ॥
श्यामवर्णं तथा शक्तिं वारयन्तं दिगम्बरम् ।
उत्सङ्गे निहितां देवीं सर्वाभरणभूषिताम् ॥
दिगम्बरां सुवदनां भुजद्वयसमन्विताम् ।
विघ्नेश्वरीतिविख्यातां सर्वावयवसुन्दरीम् ॥
पाशहस्तां तथा गुह्यं दक्षिणेन करेण तु ।
स्पृशन्तीं देवमप्येवं चिन्तयेन्मन्त्रनायकम् ॥
चतुर्भुजं त्रिनेत्रं च पाशाङ्कुशधरं विभुम् ।
इक्षुखण्डकरोपेतं वामेन देविगुह्यकम् ॥
स्पृशन्तं पुष्करेणापि खण्डमिक्षोस्तु हे द्विजाः ! ।
एवं संपाद्य तन्मन्त्रैः प्रतिष्ठामारभेद्द्विजाः ! ॥

(उत्तरकामिकागमे पञ्चचत्वारिंशत्तमपटले ॥)

अथातस्संप्रवक्ष्यामि विघ्नेशस्थापनं परम् ।
आदौ त्वहमुमासार्धं[1] क्रीडार्थं हिमवद्वने[2] ॥

---

१. उमया सार्धमित्यर्थः २. आदावित्यर्धस्यासंपूर्णार्थत्वात्तदनन्तरं करेणुश्चेत्यर्धात्पूर्वं चैकेनार्धेन भवितव्यमिति संभाव्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

करेणुश्च गजेन्द्रेण सम्भोगमकरोत्ततः ।
यदृच्छया तु तं दृष्ट्वा तदाकारमगामहम् ॥

[1]करेण्वराकृतं चोमां तदाक्रीडमहं भृशम् ।
तस्यां तु गर्भमदधात्तस्मिन्काले[2] तवो [3]भवेत् ॥

फलं दक्षिणहस्ते तु वामहस्ते स्वश्रृङ्गकम् ।
पादाङ्कुशोर्द्ध्वहस्ते[4] तु गजहस्ते तु लड्डुकम् ॥

करण्डमकुटं प्रोक्तं सर्वाभरणभूषितम् ।
शिरश्चक्रप्रभां कृत्वा पद्मपीठोपरिस्थितम् ॥

दाडिमीपुष्पसङ्काशं सर्वाभरणभूषितम् ।
आसनं स्थानकं वापि कारयेद्विघ्ननायकम् ॥

(सुप्रभेदागमे त्रिचत्वारिंशत्तमपटले ॥)

विनायकस्य वक्ष्यामि मूर्तिं चित्रोपयोगिनीम् ।
गजवक्त्रं त्रिनेत्रं च चतुर्बाहुं महोदरम् ॥

भग्नैकदन्तसंयुक्तं स्तब्धकर्णं समालिखेत् ।
नागोपवीतिनं कुब्जं पीनस्कन्धाङ्घ्रिपाणिकम् ॥

भग्नदन्तधरं चैकमन्यमुत्पलसंयुतम् ।
दक्षिणे विलिखेद्वामे सकुठारसलस्पृकौ (?) ॥

---

१ 'करेणोराकृतिं चोमा' इति भवितव्यम् । २ 'मदधां तस्मि'न्निति भवितव्यम् । ३. 'तवोद्भव' इति भवितव्यम् । ४. 'पाशाङ्कुशावूर्ध्वहस्ते' इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पार्श्वे बुद्धिकुबुद्धिभ्यामधस्तादधुनान्वितम् ।
आसीनमुत्तमे पीठे सिन्धुराननविग्रहम् ।।

(शिल्परत्नसंयोजिते कस्मिंश्चिद् ग्रन्थे ।।)

प्रमथाधिपो गजमुखः प्रलम्बजठरः कुठारधारी स्यात् ।
एकविषाणो बिभ्रन्मूलककन्दं सुनीलदलकन्दम् ।।

(बृहत्संहितायामष्टापञ्चाशत्तमाध्याये ।।)

विनायकस्तु कर्तव्यो गजवक्त्रश्चतुर्भुजः ।
स्थलकं[1] चाक्षमाला च तस्य दक्षिणहस्तयोः ।।

पात्रं चोदकपूर्णं[2] च परशुश्चैव वामतः ।
दन्तश्चास्य न कर्तव्यो वामे रिपुनिषूदन ! ।।

पादपीठकृतः पाद एक आसनगो भवेत् ।
पूर्णे चोदकपात्रे[3] च कराग्रं तस्य कारयेत् ।।

लम्बोदरस्तथा कार्यस्स्तब्धकर्णश्च यादव ! ।
व्याघ्रचर्माम्बरधरस्सर्पयज्ञोपवीतवान् ।।

(हेमाद्रिव्रतखण्डे विष्णुध० ।।)

दन्तं च परशुं पद्मं मोदकांश्च गजाननः ।
गणेशो मूषकारूढो बिभ्राणस्सर्वकामदः ।।

(रूपमण्डने ।।)

---

१. वाचस्पत्ये विनायकलक्षणप्रदर्शनावसरे 'स्थलकं गजदन्ताकार'मिति विवरणं कृतम् । २ 'मोदकपूर्णं च' इति भवितव्यम् । ३. 'मोदकपात्रे' इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

बीजगणपतिः ।

रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलि-
नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः ।
हस्ताग्राक्लृप्तपाशाङ्कुशरदवरदो नागवक्त्रोऽहिभूषो
देवः पद्मासनो वो भवतु नतसुरो भूतये विघ्नराजः ॥

धृतपाशाङ्कुशकल्पलतिकावरदश्च बीजपूरयुतः ।
शशिशकलकलितमौलिस्त्रिलोचनोऽरुणहनुश्च गजवदनः ॥

भासुरभूषणदीप्तो बृहदुदरः पद्मविष्टरो ललितः ।
..........................सम्पदे मनुजैः ॥

नमामि पाशाङ्कुशदन्तभक्ष्य-
संलक्षितं त्र्यक्षमुदारकुक्षिम् ।
नागाननं नागकृतोत्तरीय-
मुत्तप्तहेमप्रभमेकदन्तम् ॥

रत्नाक्षमालां परशुं च दन्तं
भक्ष्यं च दोर्भिः परितो दधानम् ।
हेमावदातं त्रिदृशं गजास्यं
लम्बोदरं तं शिरसा नमामि ॥

विघ्नेशं सपरश्वधाक्षपदिकं[1] दन्तोल्लस.........कै-
र्दोर्भिः पाशसृणीस्वदन्तवरदाढ्यैर्वा चतुर्भिर्युतम् ।
शुण्डाग्राहितबीजपूरमुरुकुक्षिं त्रीक्षणं संस्मरेत्
सिन्दूराभमिभास्यमिन्दुशकलाद्याकल्पमब्जासनम् ॥

---

१. अक्षपदकमिति भवितव्यम् । अक्षमालेत्यर्थः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## हेरम्बः ।

सिंहोपरि स्थितं देवं पञ्चवक्त्रं गजाननम् ।
दशबाहुं त्रिनेत्रंच जाम्बूनदसमप्रभम् ॥
प्रसादाभयदातारं पात्रं पूरितमोदकम् ।
स्वदन्तं सव्यहस्तेन बिभ्रतं चापि सुव्रते ! ॥
...करं चाक्षसूत्रं च परशुं मुद्गरं तथा ।
पाशाङ्कुशकरां शक्तिं देवं लम्बोदरं शुभम् ॥
पीवरं चैकदन्तं च तुम्बुरूणां गणान्वितम् ।
(शिल्परत्ने पञ्चविंशाध्याये ॥)

वरं तथाङ्कुशं दन्तं दक्षिणे च परश्वधः[1] ।
वामे कपालं[2] बाणाक्षपाशं कौमोदकीं तथा ॥
धारयन्तं करैरेभिः पञ्चवक्त्रं त्रिलोचनम् ।
हेरम्बं मूषकारूढं कुर्यात्सर्वार्थकामदम् ॥
(रूपमण्डने ॥)

अभयवरदहस्तं पाशदन्ताक्षमाला-
परशुमथ त्रिशीर्षैर्मुद्गरैर्मोदकं च ।
विदधतुवरसिंह[3] पञ्चमातङ्गवक्त्रः
कनकरुचिरवर्णः पातु हेरम्बनामा ॥
(क्रियाक्रमद्योतौ ॥)

---

१. 'पर्श्वधाभया'विति पाठान्तरम् । २. 'ब्यालंचे'ति पाठान्तरम् ।
३. ' विदधदपरसिंहः' इति किमु स्यात् ? ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

### वक्रतुण्डः ।

लम्बोदरं त्रिनयनं पाशाङ्कुशधरं परम् ।
वरदाभयहस्तं च लसत्कर्णं सचामरम् ॥
(रूपमण्डने ॥)

### बालगणपतिः ।

बालः प्रसूतमात्रोऽयमम्बिकाङ्के निवेशितः ।
अतिरक्तो गजमुखो द्विशदो[1] रत्नभूषितः ॥
चषकं पुष्करे बिभ्रत् सृणिपाशौ करद्वये ।
द्वाभ्यां कल्पलतां दोर्भ्यां दोलयन्रत्नवर्षिणीम् ॥
एवं ध्यात्वा जपेन्मन्त्रं बालाख्यं गणनायकम् ।
(शिल्परत्ने पञ्चविंशाध्याये ॥)

करस्थकदलीचूतपनसेक्षुकपित्थकम् ।
बालसूर्यप्रभाकारं वन्दे बालगणाधिपम् ॥

### तरुणगणपतिः ।

पाशाङ्कुशापूपकपित्थजम्बूफलं तिलान्वेणुमपि स्वहस्तैः ।
धत्ते सदायस्तरुणोऽरुणाभः पायात्सयुष्मांस्तरुणो गणेशः ॥

### भक्तविघ्नेशः ।

नालिकेराम्रकदलीगुळपायसधारिणम् ।
शरच्छशाङ्कसदृशं भजे भक्तगणाधिपम् ॥

---

१. 'द्विरद' इति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## वीरविघ्नेशः ।

वेतालशक्तिशरकार्मुकखेटखड्ग-
खट्वाङ्गमुद्गरगदाङ्कुशनागपाशान् ।
शूलं च कुन्तपरशुध्वजमुद्वहन्तं
वीरं गणेशमरुणं सततं स्मरामि ॥

## शक्तिगणेशः ।

आलिङ्ग्य देवीं हरितां निषण्णां परस्परस्पृष्टकटीनिवेशाम् ।
सन्ध्यारुणं पाशसृणिं वहन्तं भयावहं शक्तिगणेशमीडे ॥

(क्रियाक्रमद्योतौ ॥)

विषाणाङ्कुशावक्षसूत्रं च पाशं
दधानं करैर्मोदकं पुष्करेण ।
स्वपत्न्या युतं हेमभूषाम्बराढ्यं
गणेशं समुद्यद्दिनेशाभमीडे ॥

(श्रीमन्मन्त्रमहार्णवे ॥)

## ध्वजगणाधिपः ।

यः पुस्तकाक्षगुणदण्डकमण्डलुश्री-
निर्वर्त्यमानकरभूषणमिन्दुवर्णम् ।
तं घोरमाननचतुर्भुजशोभमानं
त्वां संस्मरेद् ध्वजगणाधिपते ! स धन्यः ॥



2

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

**पिङ्गलगणपतिः ।**

पक्वचूतफलकल्पमञ्जरीमिक्षुसारतिलमोदकैस्सह ।
उद्वहन्परशुहस्त ते नमः श्रीसहाययुत देवपिङ्गल ! ।।

**उच्छिष्टगणपतिः ।**

लीलाब्जं दाडिमं वीणाशाली[1] पुच्छाक्षसूत्रकम् ।
दधदुच्छिष्टनामानं गणेशं वीरमेव च ।।

(क्रियाक्रमद्योतौ ।। )

शरं धनुः पाशसृणीं स्वहस्तैर्दधानमारक्तसरोरुहस्थम् ।
विवस्त्रपत्न्या सुरतप्रवृत्तमुच्छिष्टमम्बासुतमाश्रयेऽहम् ।।
चतुर्भुजं रक्ततनुं त्रिनेत्रं पाशाङ्कुशौ मोदकपात्रदन्तौ ।
करैर्दधानं सरसीरुहस्थमुन्मत्तमुच्छिष्टगणेशमीडे ।।

(श्रीमन्मन्त्रमहार्णवे ।।)

**विघ्नराजगणपतिः ।**

पोशाङ्कुशौ धरन्नाम्रफलाशी चाखुवाहनः ।
विघ्नं विहन्तु नस्सर्वं रक्तवर्णो विनायकः ।।

**लक्ष्मीगणेशः ।**

बिभ्राणश्शुकबीजपूरकमलं माणिक्यकुम्भाङ्कुशा-
न्पाशं कल्पलतां च बाणकलिकास्रोतस्सरोनिस्सरः (?) ।

---

१. शालिपुञ्जेति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

प्रतिमालक्षणानि ।

श्यामो रक्तसरोरुहेण सहितो विद्वन्नयेनान्तिके (?)
गौराङ्गो वरदादिहस्तकमलो लक्ष्मीगणेशो महान् ॥
(क्रियाक्रमद्योतौ ॥)

दत्ताभये[1] चक्रधरौ[2] दधानं कराग्रगस्वर्णघटं त्रिनेत्रम् ।
धृताब्जयालिङ्गितमब्धिपुत्र्या लक्ष्मीगणेशं कनकाभमीडे ॥
(श्रीमन्मन्त्रमहोदधौ ॥)

महागणेशः ।

बिभ्राणोऽब्जकबीजपूरकगदा दन्तेक्षुबाणैस्समं
बिभ्राणो मणिकुम्भशालिकणिशं पाशं च वक्त्रान्वितम् ।
गौराङ्ग्या रुचिरारविन्दयुतया देव्या सनाथान्तिक-
श्शोणाङ्गश्शुभमातनोतु भवतां नित्यं गणेशो महान् ॥

भुवनेशगणपतिः ।

शङ्खेक्षुचापकुसुमेषुकवामदन्त-
पाशाङ्कुशैः कलममञ्जरिकासनाथैः ।
पाणिस्थितैः परिसमावृतभूषणश्री-
र्विघ्नेश्वरो विजयते कमनीयगौरः ॥

नृत्तगणपतिः ।

पाशाङ्कुशापूपकुठारदन्तचञ्चत्करं वलय........मङ्गुलीयकम् ।
पीतप्रभं कल्पतरूरुहस्तं भजामि नृत्तैकपदं गणेशम् ॥

---

१. दन्ताभये इति स्यात् । २. चक्रधरमिति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ऊर्ध्वगणेशः ।

कल्हारशालिकणिशेक्षुकचापबाण-
दन्तप्ररोहकभरः कनकोज्ज्वलाङ्गः ।
आलिङ्गनाद्यन्करस्तटिदाभकव्या
देव्या दिशत्वभयमूर्ध्वगणेश्वरस्ते ॥
(क्रियाक्रमद्योतौ ॥)

प्रसन्नगणेशः ।

उद्यद्दिनेश्वररुचिं निजहस्तपद्मैः
पाशाङ्कुशाभयवरान्दधतं गजास्यम् ।
रक्ताम्बरं सकलदुःखहरं गणेशं
ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥
(श्रीमन्मन्त्ररत्नाकरे ॥)

उन्मत्तविनायकः ।

चतुर्भुजं रक्ततनुं त्रिनेत्रं पाशाङ्कुशौ मोदकपात्रदन्तौ ।
करैर्दधानं सरसीरुहस्थमुन्मत्तमुच्छिष्टगणेशमीडे ॥
(मन्त्रमहोदधौ ॥)

हरिद्रागणेशः ।

पाशाङ्कुशौ मोदकमेकदन्तं करैर्दधानं कनकासनस्थम् ।
हारिद्रखण्डप्रतिमं त्रिनेत्रं पीतांशुकं रात्रिगणेशमीडे ॥
(श्रीमन्मन्त्ररत्नाकरे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## गणेशायतनम् ।

वामाङ्के गजकर्णं तु सिद्धिं दद्याच्च दक्षिणे ।
पृष्ठिकर्णेस्तथाद्र्यौ (?) च धूम्रको बालचन्द्रमाः[1] ॥

उत्तरे तु सदा गौरी याम्ये चैव सरस्वती ।
पश्चिमे यक्षराजश्च बुद्धिः पुर्वसुसंस्थिता ॥

## गणेशप्रतीहाराः ।

सर्वे च वामनाकारास्सौम्याश्च परुषाननाः ।
तर्जनी परशुः पद्ममविघ्नो दण्डहस्तकः ॥

तर्जनीदण्डापसव्ये स भवेद्विघ्नराजकः ।
तर्जनी खड्गखेटं तु दण्डहस्तस्सुवक्त्रकः ॥

तर्जनी दण्डापसव्ये दक्षिणे बलवान्भवेत् ।
तर्जनी बाणचापं च दण्डं च गजकर्णकः ॥

तर्जनी दण्डापसव्ये गोकर्णः पश्चिमे स्मृतः ।
तर्जनीपद्माङ्कुशं च दण्डहस्तः सुसौम्यकः ॥

तर्जनीदण्डापसव्ये स चैव शुभदायकः ।
पूर्वद्वारादिके सर्वे प्राच्यादिष्वष्ट संस्थिताः ॥

(रूपमण्डने ॥)

---

१. भालचन्द्रमा इति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# वैष्णवध्रुवबेराणि ।

---

## योगस्थानकमूर्तिः[1] ।

देवेशं श्यामाभं चतुर्भुजं शङ्खचक्रधरमभयकरदक्षिणहस्तं वरदं कट्यवलम्बितवामहस्तं दक्षिणे चैकजानुनासीनं भृगुं तथा वामे मार्कण्डेयं तथैव भूमिपुण्यार्चिते[2] वा दक्षिणे भित्तिपार्श्वे हेमाभं चतुर्भुजमक्षमालाकमण्डलुधरमभयकट्यवलम्बितहस्तं ब्रह्माणमुत्तराभिमुखमुत्तरे भित्तिपार्श्वे श्वेताभं चतुर्भुजं मृगपरशुधरमभयकट्यवलम्बितहस्तं शङ्करं दक्षिणाभिमुखं स्थितमेव कारयेत् ।

---

१. अनन्तशयनसंस्कृतग्रन्थप्रकाशनकार्यालयादानीतमादर्शद्वयमवलम्ब्य भूयसीनां वैष्णवप्रतिमानां लक्षणवाक्यानि वैखानसागमादुद्धृतानि । तस्मिन्ना-दर्शद्वये परस्परमर्थसाम्येऽपि भूयान्वचनव्यक्तिभेदस्समुपलभ्यते । तस्य सर्वस्यापि पाठान्तरतया प्रदर्शनं दुष्करमिति विलक्षणार्थवतामेव पदादीनां स्वरूपमधस्तादुपदर्श्यते । २. ' भूमिपुण्यार्चिते वामदक्षिणे ' इति पाठान्तरम् ।





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ब्रह्मशङ्कराभ्यां[1] हीनं मध्यमम् ।

पूजकमुनिभ्यां हीनमधमम्[2] ।

## भोगस्थानकमूर्तिः ।

द्वितीयं भोगस्थानकं चतुर्भुजं श्यामाभं शङ्खचक्रधरमभयवरद-दक्षिणहस्तकट्यवलम्बितसिंहकर्णवामहस्तं तथा ब्रह्मेशौ, दक्षिणे श्रीदेवीं रुक्माभां स्वस्थिद[3]दक्षिणपादां किंचित्कुञ्चितवामपादां धृतकमल-दक्षिणहस्तां प्रसारितवामकरां देवं किंचित्समीक्ष्य स्थितां, वामे [4]हरिणीं श्यामाभां प्रसारितदक्षिणहस्तां धृतोत्पलवामहस्तां सुस्थित[5]वामपादां किंचित्कुञ्चितदक्षिणपादां[6] देवं किंचित्समीक्ष्य स्थितां कारयेत्[7]। देव्यो-र्हस्तौ पादौ विपरीतौ वा कारयेत्। दक्षिणे[8] भृगुं [9]दक्षिणजानुनासीनं वामेनोत्कुटिकमासीनं सपद्मवामहस्तं दक्षिणोरुनिहितदक्षिणकरं वामे पुराणं वामेन जानुनासीनं सपद्मदक्षिणहस्तं [वामोरु] विन्यस्तवामकरं

---

१. एतत्पदादनन्तरं पूजकमुनिभ्यामित्यधिकमादर्शान्तरे दृश्यते । २. शङ्खचक्राभ्यां हीनमधममिति पाठान्तरम् । ३. सुस्थितेति भवितव्यम् । ४. 'हरिणी'मित्येतत्पदमादर्शान्तरे नास्ति । ५. सुस्थितेति पदमादर्शान्तरे न। ६. दक्षिणपादामित्येतदादर्शान्तरे न । ७. स्थितां कारयेदिति पदद्वयमादर्शान्तरे न । ८. दक्षिण इति पदात्पूर्वं 'कुड्यकौतुकयोर्मध्ये' इत्यादर्शान्तरे विद्यते । ९. दक्षिणजानुनेत्यारभ्य संपुटौ वा कारयेदित्यन्तस्य स्थाने ' एकजानुमासी-नमुत्कुटिकासनं वा वामे तथा पुराणमित्यन्यतरादर्शे दृश्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

कारयेत्। एवमासयित्वा हस्तौ सम्पुटौ वा कारयेत्। भित्त्यूर्ध्वभागे[१] माया-संह्लादिनीभ्यां कामिनीव्याजनीभ्यां[२] तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्यां युक्तमुत्तमं[३] भोग-स्थानकम् ।

तुम्बुरुनारदाभ्यां[४] यक्षविद्याधराभ्यां हीनं मध्यमम् ।

सनकसनत्कुमाराभ्यामादित्यचन्द्राभ्यां पूजकमुनिभ्यां हीन-मधमम् ।

## वीरस्थानकमूर्तिः ।

तृतीयं वीरस्थानकं देवं श्यामाभं[५] चतुर्भुजं[६] शङ्खचक्रधरं दक्षिणवामयोः ब्रह्मेशाभ्यां भृगुपुण्याभ्यां किष्किन्धसुन्दराभ्यां[७] सनक सनत्कुमाराभ्यां[८] सूर्यचन्द्राभ्यां युक्तमुत्तमं वीरस्थानकम् ।

किष्किन्धसुन्दराभ्यां[९] सनकसनत्कुमाराभ्यां हीनं मध्यमं वीरस्थानकम् ।

आदित्यचन्द्राभ्यां पूजकमुनिभ्यां हीनमधमं वीरस्थानकम् ।

---

१. अपरभित्त्यूर्ध्वेति पाठान्तरम् । २. व्याजकमुनिभ्यामिति पाठान्तरम्। ३. मध्यममिति पाठान्तरम्। ४. एतत्पदानन्तरमादर्शान्तरे ' किन्नरमिथुनाभ्यां हीनमधम'मिति विद्यते । ५. एतदादर्शान्तरे न । ६. एतत्पदात्पूर्वं ' देव्या सहे ' त्यादर्शान्तरे दृश्यते। ७. सुन्दरीभ्यामिति पाठान्तरम्। ८. एतत्पदात्पूर्व-मादर्शान्तरे 'व्याजकाभ्या'मित्यधिकं दृश्यते। ९. सुन्दरीभ्यामिति पाठान्तरम्।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## आभिचारिकस्थानकमूर्तिः ।

चतुर्थमाभिचारिकस्थानकं देवं द्विभुजं चतुर्भुजं वा धूमवर्णं श्यामवस्त्रधरं शुष्कवक्त्रं शुष्काङ्गं तमोगुणान्वितमूर्ध्वनेत्रं[1] ब्रह्मादिदेवैर्विवर्जितं पैशाचपद आर्द्राद्यनुक्तनक्षत्रे शर्वर्यां चरराशौ स्थापितं विमानं च लक्षणहीनं वा कारयेत् ।

## योगासनमूर्तिः ।

अथ योगासनं वक्ष्ये । देवेशं श्वेताभं पीतवाससं चतुर्भुजं जटामौलिं श्वेतपद्मे समासीनमूर्ध्वस्थित[2]दक्षिणपादमधस्स्थवामपादमङ्कविन्यस्तवामकरं शङ्खचक्ररहितपरभुजं श्वेतवस्त्रोत्तरीयं सोपवीतं कुण्डलाङ्गदहाराद्याभरणभूषितमीषन्निमीलितलोचनं च भित्तिपार्श्वे दक्षिणे ब्रह्माणमुत्तरे शङ्करमूर्ध्वभागे चन्द्रादित्यौ सनकसनत्कुमारौ [3]कौतुकाद्दक्षिणवामभागयोर्भृगुमार्कण्डेयौ तथा महीमार्कण्डेयौ वा कारयेत्तदुत्तमं योगासनम् ।

[4]चन्द्रादित्याभ्यां सनकसनत्कुमाराभ्यां हीनं मध्यमम् ।
भृगुमार्कण्डेयाभ्यां हीनमधमम् ।

---

१. आदर्शान्तरे ऊर्ध्वनेत्रमित्यस्य स्थाने 'नेतृ' इति दृश्यते । २. ऊर्ध्वेत्यारभ्य परभुजमित्यन्तस्य स्थाने "दक्षिणे ऊर्ध्वमन्यमधस्स्थमेव ब्रह्मासनमासीनमासयित्वाङ्के वामावामकरौ पल्लवौ विन्यस्य अन्यहस्तौ शङ्खचक्रौ विनाकौ" इत्यादर्शान्तरे दृश्यते । ३. 'चक्रौ तु दक्षिणे' इति पाठान्तरम् । ४. 'भृगुमार्कण्डेयाभ्यां हीनं मध्यमम्। चन्द्रादित्याभ्यां हीनं सनकसनत्कुमाराभ्यां हीनमधमं योगासन'मिति पुस्तकान्तरे विद्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## भोगासनमूर्तिः ।

देवं सिंहासने समासीनं श्यामलाङ्गं चतुर्भुजं शङ्खचक्रधरमभयवरददक्षिणहस्तकटिविन्यस्तसिंहकर्णवामहस्तं [1]प्रसारितदक्षिणपादं दक्षिणे श्रियं देवीं वामपादमाकुञ्च्य दक्षिणं प्रसार्य सिंहासने समासीनां [2]वामपार्श्वे महीं देवीं दक्षिणं पादमाकुञ्च्य वामं प्रसार्य सिंहासनसमासीनामेतयोर्वामदक्षिणकरौ पद्मोत्पलधरावन्यहस्तौ सिंहासने निहितौ स्वोरुनिहितौ सिंहकर्णौ वा तद्विपरीतौ वा................दक्षिणोत्तरयोर्ब्रह्मशङ्करौ तथासीनौ भृगुमार्कण्डेयौ चैकजानुक्रमेणासीनावन्यत्सर्व[3] योगासनवत्कुर्यात् । [4]अपरभित्तिपार्श्वे मायासंह्लादिनीभ्यां तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्यां [5]देवद्रुमसमायुक्तमुत्तमं भोगासनम् ।

तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां हीनं मध्यमम् ।

सनकसनत्कुमाराभ्यामादित्यचन्द्राभ्यां पूजकमुनिभ्यां हीनमधमं भोगासनम् ।

---

१. 'पादेन्यस्ये'ति पाठान्तरम् । २. वामपार्श्वे इत्यारभ्य समासीनामित्यन्तं पुस्तकान्तरे न दृश्यते । ३. 'अन्याभोगस्थानकव'दिति पाठान्तरम् । ४. एतत्पदमादर्शान्तरे न । ५. ' देवेन्द्रमौ च ' इति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## वीरासनमूर्तिः ।

[1]सिंहासनोपरिष्टात्पद्मासने वामपादं समाकुञ्च्य दक्षिणं किञ्चित्प्रसार्य समासीनं चतुर्भुजं शङ्खचक्रधरमभयदक्षिणहस्तं सिंहकर्णवामहस्तं प्रवालाभं श्यामाम्बरधरं पूजकस्थाने दक्षिणे श्रीदेवीं वामे महीदेवीमेकजानुक्रमेणासयित्वा दक्षिणे ब्रह्माणं मार्कण्डेयं[2] वामे शङ्करं भृगुं च गीर्वाण्यौ चामरधारिण्यौ च कारयेत् । सनकसनत्कुमाराभ्यां तुम्बुरुनारदाभ्यां सूर्यचन्द्राभ्यां सहितमुत्तमं वीरासनम् ।

[3] तुम्बुरुनारदाभ्यां सनकसनत्कुमाराभ्यां कामिनी[4]व्याजनीभ्यां हीनं मध्यमम् ।

[5]ब्रह्मशङ्कराभ्यां सूर्यचन्द्राभ्यां पूजकस्थाने देवीभ्यां हीनमधमं वीरासनम् ।

## आभिचारिकासनमूर्तिः ।

देवं[6] वेदिकासने समासीनं द्विभुजं चतुर्भुजं वा नीलाभं श्यामवस्त्रधरं तमोगुणान्वितमूर्ध्वाक्षं [7]देव्यादीन्विना लक्षणहीने विमाने

---

१. सिंहासनेत्यारभ्य समासीनमित्यन्तमादर्शान्तरे न दृश्यते । २. मनुंचेति पाठान्तरम् । ३. एतत्पदात्पूर्वं ब्रह्मशङ्कराभ्यामित्यधिकमादर्शान्तरे दृश्यते ४. एतत्पदमादर्शान्तरे न । ५. एतत्पदमादर्शान्तरे न । ६. 'चतुर्थमाभिचारिकासनेनासीनं द्विभुज'मिति पाठान्तरम् । ७. 'देवादिदेवानां विने'ति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

शत्रुदिङ्मुखे कृष्णाष्टम्यामार्द्राद्यनुक्तनक्षत्रे रात्रै गर्भालये पैशाचपदे चरराशौ स्थापितमाभिचारिकासनम् ।

## योगशयनमूर्तिः ।

अथ योगशय्याक्रमं वक्ष्ये । देवं द्विभुजमर्धार्धशयनं पीतश्यामं [1] दक्षिणहस्तमुपधाने न्यस्य मौल्यग्रं समुद्धृत्य सम्यक्प्रसार्य वान्यं समाकुञ्च्य तत्कोर्परमूर्ध्वं कृत्वा कटिमवलम्ब्याथवा तदूरौ प्रसार्य वा, पादं दक्षिणं प्रसार्य वाममाकुञ्च्य शयानं सर्वाभरणभूषितं किंचिदुन्मीलितलोचनं भृगुपुण्यार्चितं[2] पादपार्श्वे[3] मधुकैटभसंयुक्तं च नाभ्यम्बुजसमासीनं ब्रह्माणं पञ्चायुधान् गरुडं विष्वक्सेनं सप्तर्षींश्चापरभित्त्यूर्ध्वभागे प्राञ्जलीकृत्य स्थितान्दक्षिणभित्तिपार्श्वे ब्रह्माणं वामे शङ्करं च समासीनमेव कारयेत् । एतदुक्तमं योगशयनम् ।

सप्तर्षीन्विष्वक्सेनं च विना मध्यमम् ।
पूजकमुनिभ्यां मधुकैटभाभ्यां विनाधमं विज्ञायते ।

---

१. दक्षिणेत्यारभ्य प्रसार्य वा पादमित्यन्तस्य स्थाने 'दक्षिणे हस्तमुपधान्येन न्यस्तमौलिसीमान्ते समुद्धृतसम्यक्प्रसारितमन्यहस्तं समाकुञ्चित-कोर्परमूर्ध्वं कृत्वा कटकाङ्गुलीययुतमथवा तदूरुप्रसारितपादमित्यादर्शान्तरे दृश्यते । २. पुम्यासार्चितामिति पाठान्तरम् । ३. पादेत्यादर्शान्तरे न ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## भोगशयनमूर्तिः ।

द्वितीयं भोगशयनं देवेशं श्यामलाङ्गं दर्शनीयं[1] सुपुष्टाङ्गं चतुर्भुजं [2]वार्धशयानं चापवद्गात्रं हस्तं दक्षिणमुपधाने निधाय मकुटमालम्ब्य किंचित्प्रसार्य वामं वामोरौ प्रसार्य दक्षिणं पादं प्रसार्य वाममाकुञ्च्य शयानं कारयेत् ।........ .......शिरःपार्श्वे श्रियं देवीं देवस्कन्धबाहुस्पर्शां[3] सपद्मदक्षिणहस्तां कटकवामहस्तां पादपार्श्वे[4] महीदेवीं वामाङ्घ्रिसंस्पर्शां हस्तेन दक्षिणेनोत्पलधृतां वामहस्तं कटकं कौतुकाद्दक्षिणे मार्कण्डेयं वामे भृगुं दक्षिणे भित्तिपार्श्वे चासीनं ब्रह्माणं वामे शङ्करं च दक्षिणे वक्रतुण्डं वामे विन्ध्यवासिनीं पादपार्श्वे मधुकैटभावुग्रवेगसमन्वितौ समुद्रतरङ्गच्छादितजानू अनन्तस्य विषज्वालाभिर्दह्यमानौ वा कारयेत् । नाभिपद्मे समासीनं ब्रह्माणं तद्दक्षिणे पञ्चायुधान् गरुडोपरिष्टाद्दक्षिणे भास्करमुत्तरे[5] निशाकरं तथा बालरूपिणौ तुम्बुरुनारदौ दक्षिणे[6]ऽश्विनावष्टलोकपालांस्तथाप्सरसश्च कारयेत् । एतदुत्तमं भोगशयनम् ।

तुम्बुरुनारदाभ्यां[7] लोकपालैश्च विना मध्यमम् ।
पूजकमुनिभ्यामप्सरोभिश्च विनाधमम् ।

---

१. आदर्शान्तरे न । २. 'वार्धार्धशायितं गात्रं चलवद्धस्त'मिति पाठान्तरम् । ३. देवस्य बाहुसंस्पर्शामिति पाठान्तरम् । ४. पादपार्श्वे इत्यारभ्य कटकमित्यन्तमादर्शान्तरे न । ५. दक्षिण इति पाठान्तरम् । ६. अदक्षिण इति पाठान्तरम् । ७. एतदनन्तरमश्विभ्यामित्यधिकमादर्शान्तरे दृश्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## वीरशयनमूर्तिः ।

तृतीयं वीरशयनं देवं श्यामाभं चतुर्भुजं शङ्खचक्रधरं सव्यहस्तं शिरोपधानं कृत्वा वामहस्तं प्रसार्य शयानं पादपार्श्वे श्रीभूमिभ्यां पादमर्दकाभ्यां मधुकैटभाभ्यां संयुक्तं कौतुकाद्दक्षिणे मार्कण्डेयं वामे भृगुं नाभिपद्मे समासीनं ब्रह्माणं पञ्चायुधान् गरुडं चन्द्रादित्यौ सप्तर्षीन् द्वादशादित्यानेकादशरुद्रान् जयाद्यप्सरसस्तुम्बुरुनारदौ किन्नर-मिथुने[1] सनकसनत्कुमारौ ब्रह्मेशौ[2] च कारयेदिति । तदुत्तमं वीरशयनम् ।

रुद्रादित्यैरप्सरोभिर्मुनिभिश्च विना मध्यमम् ।

किन्नरमिथुनाभ्यां सनकसनत्कुमाराभ्यां पूजकमुनिभ्यां हीन-मधमम् ।

## आभिचारिकशयनमूर्तिः ।

शेषशयनं लक्षणहीनं[3] द्विफणं द्विवलयमनुन्नतं शिरःपार्श्वे, देवं नीलाभं द्विभुजं[4] चतुर्भुजं वा समनयनं[5] महानिद्रासमायुक्तं शुष्कवक्त्रं शुष्काङ्गं श्यामवस्त्रधरं सर्वदेवैर्विहीनं[6] कारयेत् । एत-दुत्तममाभिचारिकं शयनम् ।

---

१. आदर्शान्तरे 'किन्नरामिथुने' इति न । २. एतदादर्शान्तरे न । ३. 'सलक्षण' मिति पाठान्तरम् । ४. एतदादर्शान्तरे न । ५. समगयनामिति पाठान्तरम् । समशयनमिति स्यात् । ६. सर्वदेवानकविना चोत्तरमुखमाभिचा-रिकशयनमिति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

एकफणमेकवलयं[1] मध्यमम् ।
सर्पदेहं विना समस्थलशयनमधमम् ।
(वैखानसागमे ॥)

---

१. शयनमिति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# दशावताराः ।

---

### मत्स्यमूर्तिः ।

मत्स्यावतारिणं देवं मत्स्याकारं प्रकल्पयेत् ।

### कूर्ममूर्तिः ।

कूर्मावतारिणं देवं कमठाकृतिमालिखेत् ॥

(शिल्परत्ने पञ्चविंशपटले ॥)

### वराहः ।

आदिवराहं चतुर्भुजं शङ्खचक्रधरं सस्यश्यामानिभं[1] नागेन्द्र[2]-फणामणिस्थापितदक्षिणपादं तदूरौ महीं दधानं दक्षिणहस्तेन देव्योः पादौ गृह्णन्तं वामहस्तेन तामुपगृह्णन्तं मुखेन देवीं जिघ्रन्तं कृत्वा तां महीं प्राञ्जलीकृतहस्तां प्रसारितपादां पुष्पाम्बरधरां श्यामाभां किंचिद्देवं

---

१. सन्ध्याश्यामनिभमिति पाठान्तरम्। २. नागेन्द्रेत्यारभ्य कृत्वेत्यन्तस्य स्थाने 'पादं दक्षिणं सपत्नीकं नागेन्द्रस्य फणामणिस्थापितं वामकरस्थापि-कलामुत्क्रमणाय कुञ्चितविस्ताराभ्यां महीमादाय देवेशस्य आरूढाभ्यां द्वयो-स्संन्यस्य देवस्य हस्तेन दक्षिणे देव्याः पादौ गृहीत्वा तस्यापरभागे वामहस्तेन धारयन् देवस्य मुखेन देवीं जिघ्रन्तं वा कारयेत् ।' इत्यादर्शान्तरे दृश्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

समीक्ष्य व्रीडाहर्षेण संयुक्तां सर्वाभरणसंयुतां देवस्य स्तनान्तां वा पञ्चतालेन मानेन कारयेत् ।

(वैखानसागमे षट्पञ्चाशपटले ॥)

नृवराहं प्रवक्ष्यामि सूकरास्येन शोभितम् ।
गदापद्मधरं धात्रीं दंष्ट्राग्रेण समुद्धृताम् ॥
बिभ्राणं कोर्परे वामे विस्मयोत्फुल्ललोचनाम् ।
नीलोत्पलधरां देवीमुपरिष्टात्प्रकल्पयेत् ॥
दक्षिणं कटिसंस्थं च बाहुं तस्य प्रकल्पयेत् ।
कूर्मपृष्ठे पदं चैकमन्यन्नागेन्द्रमूर्धनि ॥
अथवा सूकराकारं महाकायं क्वचिल्लिखेत् ।
तीक्ष्णदंष्ट्राग्रघोणास्यस्कन्धकर्णोर्ध्वरोमकम् ॥

(शिल्परत्ने पञ्चविंशपटले ॥)

नराङ्गो वाथ कर्तव्यो भूवराहो गदादिभृत् ।
दक्षिणे वामके शङ्खं लक्ष्मीर्वा पद्ममेव वा ॥
श्रीर्वामकूर्परस्था तु क्ष्मानन्तौ चरणानुगौ ।
वराहस्थापनाद्राज्यं भवाब्धितरणं भवेत् ॥

(अग्निपु० ४९ अ० ॥)

ऐश्वर्यसंनिरुद्धश्च वराहो भगवान् हरिः ।
ऐश्वर्यशक्त्या दंष्ट्राग्रसमुद्धृतवसुन्धरः ॥

नृवराहोऽथवा कार्यश्शेषोपरिगतः प्रभुः ।
शेषश्चतुर्भुजः कार्यश्चारुरत्नफणान्वितः ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

आश्चर्योत्फुल्लनयनो देववीक्षणतत्परः।
कर्तव्यौ सीरमुसलौ करयोस्तस्य यादव! ॥

सर्पभोगश्च कर्तव्यस्तथैव रचिताञ्जलिः।
आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान्भवेत् ॥

वामारत्निगता तस्य योषिद्रूपा वसुन्धरा।
नमस्कारपरा तस्य कर्तव्या द्विभुजा शुभा ॥

यस्मिन् भुजे धरा देवी तत्र शङ्खकरो भवेत्।
अन्ये तस्य कराः कार्याः पद्मचक्रगदाधराः ॥

हिरण्याक्षशिरश्छेदचक्रोद्वृत्तकरोऽथवा।
मृतोद्धतहिरण्याक्षस्सुमुखो भगवान्भवेत् ॥

मूर्तिमन्तमनैश्वर्यं हिरण्याक्षं विदुर्बुधाः।
ऐश्वर्येणाविनाशेन स निरस्तोऽरिमर्दनः ॥

नृवराहोऽथवा कार्यो ध्याने कपिलवत्स्थितः।
द्विभुजस्त्वथवा कार्यः पिण्डानिर्वपनोद्यतः ॥

समग्रक्रोडरूपेण बहुदानवमध्यगः।
नृवराहो वराहश्च कर्तव्यः क्ष्माविदारणः ॥

(विष्णुधर्मोत्तरे ॥)

मत्स्यकूर्मौ स्वस्वरूपौ नृवराहो गदाम्बुजे।
बिभ्रच्छयामो वराहास्यो दंष्ट्राग्रेणोद्धृतां धराम् ॥

(रूपमण्डने ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## प्रलयवराहः ।

वक्ष्ये प्रलयवराहं वामपादं समाकुञ्च्य दक्षिणं प्रसार्य सिंहासने समासीनं नीलाभं[1] शङ्खचक्रधरमभयदक्षिणहस्तमूरुप्रतिष्ठितवामहस्तं पीताम्बरधरं सर्वाभरणभूषितं कारयित्वा तस्य दक्षिणे देवीं महीं पादं वाममाकुञ्च्य दक्षिणं प्रसार्यासीनां श्यामाभां सर्वाभरणभूषितामुत्पलधरवामकरामासननिहितदक्षिणकरां किंचिद्देवं समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत् ।

## यज्ञवराहः ।

अथ यज्ञवराहं श्वेताभं चतुर्भुजं शङ्खचक्रधरं वामपादं समाकुञ्च्य दक्षिणं प्रसार्य सिंहासने समासीनं पीताम्बरधरं सर्वाभरणभूषितं कारयित्वा तस्य दक्षिणे देवीं श्रियं हेमाभां वामपादं समाकुञ्च्य दक्षिणं प्रसार्यासीनां पद्मधरवामहस्तामासने निहितदक्षिणहस्तां वामपार्श्वे महीं देवीं सस्यश्यामनिभां दक्षिणपादमाकुञ्च्य वामं प्रसार्यासीनामुत्पलधरदक्षिणहस्तामासने निहितवामहस्तां देवं किंचित्समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत् । त्रयाणां वराहाणां तत्तद्रूपं कौतुकबिम्बं विष्णुं चतुर्भुजं वा कारयेत् ।

## नरसिंहः ।

नारसिंहो द्विविधो गिरिजस्स्थूण[2]जश्चेति । तयोर्मुखं सिंहस्येवान्यन्नराकारं तस्य मूर्धादिपादतलान्तं सविंशतिशताङ्गुलं..........

---

१. नीलाभमित्यारभ्य प्रसार्यासीनामित्यन्तमादर्शान्तरे नास्ति ।
२. स्थूणाज इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

............................नारसिंहं देवं सिंहासने पादं दक्षिणं प्रसार्य वाममाकुञ्च्य समासीनं चतुर्भुजं शङ्खचक्रधरं कुन्देन्दुधवलप्रभं रक्तवस्त्रधरं सर्वाभरणभूषितं करण्डिकामकुटयुतं पूर्वं दक्षिणकरमभयं दधानं वामं कट्यवलम्बितमूरुस्थं वा कारयेत् । तद्दक्षिणे श्रियं देवीं वामपादमाकुञ्च्य दक्षिणं प्रसार्यासीनां पद्मधरवामहस्तामासने निहितदक्षिणहस्तां सुवर्णाभां सर्वाभरणभूषितां वामपार्श्वे महीं देवीं दक्षिणं पादमाकुञ्च्य वामं प्रसार्यासीनामुत्पलधरदाक्षिणहस्तामासने निहितवामहस्तां श्यामाभां सर्वाभरणभूषितां कारयेत् । अथवा सिंहासनस्योर्ध्वे वामं पादं प्रसार्यान्यमाकुञ्च्य तज्जानूर्ध्वे दक्षिणहस्तं गजहस्तवत्प्रसार्य वाममूरौ संन्यस्यासीनं शङ्खचक्रधरं देवीभ्यां सहितं कारयेत् ।

केवलनरसिंहः ।

केवलं नृसिंहदेवं पद्मपीठोपरिष्टाद् द्वौ पादौ व्यत्ययेन न्यस्योत्कुटिकासनेनासयित्वोरुमध्ये वस्त्रेणाबध्य सर्वाभरणसंयुक्तं चतुर्भुजं शङ्खचक्रधरमन्यहस्तौ जानूपरिष्टात्प्रसारितौ[1] च कारयेत् ।

(वैखानसागमे ॥)

आसीनं द्विभुजं देवं प्रमत्तवदनेक्षणम् ।
श्वेतस्फटिकसङ्काशं चतुर्बाहुमथापि वा ॥

१. प्रसारितवियुक्तं वा संस्थापयेदिति पुस्तकान्तरे दृश्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

आजानुलम्बिनौ बाहू कर्तव्यौ तत्र दक्षिणे ।
समीपे कल्पयेच्चक्रं वामे शङ्खं समीपतः ॥
ऊर्ध्वस्थिताभ्यां बाहुभ्यां दक्षिणे पङ्कजं न्यसेत् ।
वामे बाहौ गदामाभ्यां[1] लिखेच्चित्रविशारदः ॥

(शिल्परत्नसंयोजिते कस्मिंश्चिद्ग्रन्थे ॥)

## स्थौणनारसिंहः ।

अथ [2]स्थूणनारसिंहं सोपाधानसिंहासने[3] वामपादमाकुञ्च्यान्यं प्रसार्य समासीनं चतुर्भुजं शङ्खचक्रधरमभयक[4]दानदक्षिणहस्तमूरुप्रतिष्ठितवामहस्तं [5]सटास्कन्धसंयुक्तं तीक्ष्णदंष्ट्रेक्षणं भयानकं[6] श्वेताभं रक्ताम्बरधरं सर्वाभरणसंयुक्तं कारयेत्[7] । तस्य कोपशान्त्यर्थं पार्श्वयोर्दक्षिणवामयोः श्रीमह्यौ प्रह्लादं वन्दमानं च कारयेत् । दक्षिणे नारदं वीणाहस्तं भित्तिपार्श्वे परितः प्रागाद्यैशानान्तमिन्द्रादिलोकपालान्वन्दमानांश्च कारयेत् ।

(वैखानसागमे ॥)

---

१. 'गदां रम्या'मिति किमु स्यात्? २. स्थौणेति स्यात् । ३. सोपान इति पाठान्तरम् । ४. दक्षिणं पूर्वमभयमिति पाठान्तरम् । ५. एतदादर्शान्तरे नास्ति । ६. 'भयानकं चेद्धीमं रक्ताम्बरधर'मित्यादर्शान्तरे दृश्यते । ७. एतद्वाक्यादनन्तर 'मथवा षोडशद्वादशहस्तैर्युक्तं त्रिभागं स्थितं वामोरौ सुरेन्द्रं विन्यस्योरसि हस्ताभ्यां नखैर्भेदयित्वा दक्षिणभागे चैकैकाभयप्रदानमेकेन श्रोत्राङ्गुलीय विन्यस्यासं वामे चैकेन मकुटग्रहणमेकेन मुष्टिप्रहरणमन्यैर्दमनं वाशीघ्रां सतीत्येवमतिभयानकं कृत्वा' इत्यधिकमादर्शान्तरे विद्यते।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

नृसिंहस्याकृतिं वक्ष्ये रौद्रपिङ्गमुखेक्षणाम् ।
भुजाष्टकसमायुक्तां [1]स्कन्धपीनसमाश्रिताम् ॥

हिरण्यकशिपुं दैत्यं दारयन्तीं नखाङ्कुरैः ।
ऊरोरुपरि पीनस्य खड्गखेटकधारिणम् ॥

तस्यान्त्रमाला निष्कृत्य[2] बाहुयुग्मेन बिभ्रतीम् ।
मध्यस्थिताभ्यां बाहुभ्यां दक्षिणे चक्रपङ्कजौ ॥

कौमोदकीं गदां शङ्खं बाहुभ्यामिति वामतः ।
नीलोत्पलवदच्छायां[3] किं वा चम्पकसप्रभाम् ॥

तप्तकाञ्चनसङ्काशां बालार्कसदृशीं लिखेत् ।

(शिल्परत्ने पञ्चविंशपटले ॥)

नरसिंहो विवृत्तास्यो वामोरुक्षतदानवः ।
तद्वक्षो दारयन्माली स्फुरच्चक्रगदाधरः ॥

(अग्निपु० ४९ अ० ॥)

य एवं भगवान्विष्णुर्नरसिंहवपुर्धरः ।
ध्यानविधिस्स एवोक्तः परमज्ञानवर्धनः ॥

पीनस्कन्धकटिग्रीवः कृशमध्यः कृशोदरः ।
सिंहाननो नृदेहश्च नीलवासाः प्रभान्वितः ॥

---

१. पीनस्कन्धेति स्यात् । २. निष्कृष्येति भवितव्यम् । ३. दलेति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

आलीढस्थानसंस्थानस्सर्वाभरणभूषितः।
ज्वालामालाकुलमुखो ज्वालाकेसरमण्डलः॥
हिरण्यकशिपोर्वक्षः पाटयन्नखरैः खरैः।
नीलोत्पलाभः कर्तव्यो देवजानुगतस्तथा॥
हिरण्यकशिपुर्दैत्यस्तमज्ञानं विदुर्बुधाः।

(विष्णुधर्मोत्तरे॥)

नृसिंहस्सिंहवक्त्रोऽतिदंष्ट्रालः कुटिलोरुकः।
हिरण्योरस्स्थलासक्तविदारणकरद्वयः॥

(रूपमण्डने॥)

यानकनरसिंहः।

अथ यानकनरसिंहं वीशस्कन्धोपरिष्टाच्छेषोत्सङ्गे समासीनं तत्फणैः पञ्चभिः [छ*] न्नमौलिं चतुर्भुजं शङ्खचक्रधरं सर्वाभरणभूषितं कारयेत्। अथवाष्टाभिर्द्विरष्टाभिर्वा भुजैर्युक्तं भयानकं दैत्यवधानुरूपं नृसिंहं स्थूणजं कारयेत्।

(वैखानसागमे॥)

वामनः।

अथ वामनं पञ्चतालमितिं[1] द्विभुजं छत्रदण्डधरं कौपीनवाससं शिखापुस्तकमेखलोपवीतकृष्णाजिनसमायुतं पवित्रपाणिं बालरूपं ब्रह्मवर्चस्विनं कारयेत्।

(वैखानसागमे॥)

१. एतदनन्तरं 'मूर्धादिपादतलान्तं षडङ्गुल' मित्यधिकमादर्शान्तरे दृश्यते।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

कृष्णाजिन्युपवीती स्याच्छत्री धृतकमण्डलुः ।
कुण्डली शिखया युक्तः कुब्जाकारो महोदरः ॥
(शिल्परत्ने पञ्चविंशपटले ॥)

छत्री दण्डी वामनस्स्यादथवा स्याच्चतुर्भुजः ।
(अग्निपु० ४७ अ० ॥)

कर्तव्यो वामनो देवस्सङ्कटैर्गात्रपर्वभिः ।
पीनगात्रश्च कर्तव्यो दण्डी चाध्ययनोद्यतः ॥
दूर्वाश्यामश्च कर्तव्यः कृष्णाजिनधरस्तथा ।
(विष्णुधर्मोत्तरे ॥)

वामनस्साशिखश्श्यामो दण्डी पीनोऽम्बुपात्रवान् ।
(रूपमण्डने ॥)

त्रिविक्रमः ।

[1]त्रिविक्रमस्त्रिविधः प्रोक्तो लोकेषु त्रिपदन्यासाद् भूलोकाक्रमणार्थं जानुमात्रमन्तरिक्षलोकाक्रमणार्थं नाभिमात्रं स्वर्गलोकाक्रमणार्थं ललाटमात्रं चोर्ध्वपादो भवेत् । एतेषु यथेष्टरूपं निश्चित्य पूर्ववच्चतुर्विं-

---

१. त्रिविक्रमं त्रिधा प्रोक्तं लोकेति पदविन्यासाद् भोलोकात्क्रमेण ललाटसीमान्तमुद्धृतमेतैर्यथेष्टानिरूपं निश्चित्य पूर्ववच्चतुर्विंशतिशताङ्गुलभेदेन देवं चतुर्भुजमष्टभुजं वा अष्टभुजं चेद्दक्षिणे चक्रासिशक्तिधरं वामे खेटकशार्ङ्ग हलमुसलधरमेवमष्टभुजं चतुर्भुजो दक्षिणे चक्रं वामे शङ्खं तद्विपरीतं स्ववामपादं दक्षिणं स्थितं वामं प्रसारितं दक्षिणमुत्तानकरं वामं प्रसारितपादेन सह प्रसारितं श्यामाभं रक्ताम्बरधरं सर्वाभरणभूषितं तत्पृष्ठे कल्पद्रुरिन्द्रच्छत्रधर-



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

शतितालविभागेन देवमष्टबाहुं चतुर्बाहुं वाष्टभुजे दक्षिणहस्ते चक्रशङ्खगदाशार्ङ्गहलधरं चतुर्भुजे दक्षिणहस्तेन चक्रधरं वामहस्तेन शङ्खधरमभयं वरदं वा दधानं दक्षिणहस्ते, प्रसारितपादेन प्रसारितवामहस्तं स्थितदक्षिणपादं प्रसारितोद्धृतवामपादं श्यामाभं रक्ताम्बरधरं सर्वाभरणभूषितं, तत्पृष्ठे कल्पद्रुममिन्द्रश्छत्रमुभयोः पार्श्वयोर्जवनजलेशौ चामरधारिणौ तदूर्ध्वे दक्षिणे दिवाकरं वामे निशाकरं तथा सन्[1] सनकसनत्कुमारौ च कृत्वा प्रसारितपादस्योर्ध्वभागे ब्रह्माणं तत्पादं प्रगृह्य हस्ताभ्यां प्रक्षालयन्तं कृत्वा तत्स्रोतसीं गङ्गां श्वेताभां नाभेरूर्ध्वं शङ्करं प्राञ्जलीकृतहस्तं च कारयेत् । पादपार्श्वे नमुचिमंत्रममाणं (?) वामपार्श्वे क्रतुविघ्नकरं तं मुष्टिना प्रहरन्तं गरुडं, दक्षिणे वामनं तत्पार्श्वे बलिं हेमाभं सर्वाभरणभूषितं सपत्नीकं हर्षेण पाणिभ्यां हेमकलशमुद्धरन्तं तस्योर्ध्वे जाम्बवन्तं भेरीताडनपरं च कारयेत् । अत्रानुक्तं सर्वं भूभर्तुर्विधिना कारयेत् । त्रिविक्रमस्य कौतुकं विष्णुं चतुर्भुजमेव कारयेत् ।

(वैखानसागमे ॥)

---

मुभौ पार्श्वे जवनं जलेशौ चामरधारिणौ तदूर्ध्वे दक्षिणादिवामकरं दक्षिणे निशाकरं तथा सनकसन्यससनत्कुमारौ च प्रसारितभागस्य ऊर्ध्वपादे ब्रह्माणं तत्पादं प्रगृह्य हस्ताभ्यां प्रक्षालनं कृत्वा तच्छ्रोतस्योरुगणपार्श्वे तद्भागौ ऊर्ध्वमन्यत्सर्वं हरेरिव कारयेत् ।' इत्यादर्शान्तरे त्रिविक्रमलक्षणं दृश्यते । १. सन्यसमिति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

त्रिविक्रमक्रमं वक्ष्ये वामपादेन मेदिनीम् ।
आक्रामन्तं द्वितीयेन साकल्येन नभस्स्थलम् ॥

(शिल्परत्ने पञ्चविंशपटले ॥)

सजलाम्बुदसंकाशस्तथा कार्यस्त्रिविक्रमः ।
दण्डपाशधरः कार्यश्शङ्खचक्रगदाधरः ॥
शङ्खचक्रगदापद्माः कार्यास्तस्य सुरूपिणः ।
निर्देहास्ते[1] न कर्तव्याश्शेषं कार्यं तु पूर्ववत् ॥
एकोर्द्ध्ववदनः कार्यो देवो विष्फारितेक्षणः ।

(विष्णुधर्मोत्तरे ॥)

## जामदग्न्यरामः ।

जामदग्न्यरामं मध्यमदशतालेन मितं सविंशतिशताङ्गुलं द्विभुजं रक्ताभं श्वेतवस्त्रधरं दक्षिणहस्तेन परशुधरमुदेश्यवामकरं जटामकुटधरं सोपवीतं सर्वाभरणभूषितमेवं कारयेत् । कौतुकं तद्रूपं विष्णुं चतुर्भुजं वा कारयेत् ।

(वैखानसागमे ॥)

रामश्चापेषुहस्तस्स्यात्खड्गी परशुनान्वितः ।

(अग्निपु० ४९. अ० ॥)

---

१. 'नृदेहास्ते' इति स्यात् ।





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

कार्यस्तु भार्गवो रामो जटामण्डलदुर्दृशः ।
हस्तेऽस्य परशुः कार्यः कृष्णाजिनधरस्य तु ॥
(विष्णुधर्मोत्तरे ॥)

जटाजिनधरो रामो भार्गवः परशुं दधत् ।
(रूपमण्डने ॥)

राघवरामः ।

अथ राघवरामं सविंशतिशताङ्गुलमितं द्विभुजं त्रिभङ्गस्थितं[१] दक्षिणेन हस्तेन शरधरं वामेन चापधरं श्यामाभं रक्ताम्बरधरं किरीटाद्याभरणान्वितं[२] कारयेत् । देवस्य बाहुसमां देवीं सीतां[३] नवार्धतालमानेनाभङ्गवशाद्रुक्माभां शुकपिञ्छनिभाम्बरधरां सर्वाभरणभूषितां धम्मिल्लबन्धयुतां करण्डिकामकुटोपेतां वामहस्तेन नीलोत्फुल्लपद्मधरां प्रसारितदक्षिणहस्तां कारयेत् । देवस्य दाक्षिणे पार्श्वे देवं[४] किञ्चित्समीक्ष्य विस्मयोत्फुल्ललोचनां देवीं[५] कारयेत् । वामपार्श्वे सौमित्रिं[६] देवस्य कर्णसीमान्तं बाह्वन्तं वा लक्ष्मणं दशतालं षोडशाधिकशताङ्गुलं........ .... .......उद्बद्धकुन्तलं[७]युवराजभूषणान्वितं द्विभुजं रामवच्छरचाप-

---

१. 'त्रिभङ्गसतो' इति पाठान्तरम् । २. एतत्पदादनन्तरं दशरथमित्यादर्शान्तरे दृश्यते । ३. स्थितामिति पाठान्तरम् । ४. देवीमिति पाठान्तरम् । ५. एतदादर्शान्तरे न । ६. 'सौमित्रिं देवस्ये'ति पदद्वयमादर्शान्तरे न । ७. 'उद्बद्धेत्यारभ्य किंचिदूर्ध्वाननं कारये'दित्यन्तस्य स्थाने 'भूषणाञ्चितं सुवर्णाभं श्यामाम्बरधरं चापधरं रामवत्स्थितं कारयेत् । हनूमन्तं प्रमुखे



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

धरं सुवर्णवर्णं श्यामाम्बरधरं समभङ्गान्वितं कारयेत् । हनूमन्तं प्रमुखे किंचिद् दक्षिणमाश्रित्य स्थितं देवस्य स्तनान्तं नाभ्यन्तमूरुमूलान्तं वा सप्ततालमितं द्विभुजं दक्षिणेन हस्तेनास्यं[1] वामेन स्ववस्त्रं च पिधानं[2] किञ्चिदूर्ध्वाननं कारयेत् ।

(वैखानसागमे ॥)

रामश्चापी शरी खड्गी शङ्खी वा द्विभुजस्स्मृतः ।

(अग्निपु० ४९ अ० ॥)

रामो दाशरथिः कार्यो राजलक्षणलालितः ।
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाशयाः ॥
तथैव सर्वे कर्तव्याः किं तु मौलिविवर्जिताः ।

(विष्णुधर्मोत्तरे ॥)

रामश्शरेषुधृक्छयामः ससीरमुसलो बलः ।

(रूपमण्डने ॥)

आग्नेये राघवं पश्चिमाभिमुखमुत्तराभिमुखं वा[3] श्यामाभो रक्ताम्बरो मकुंटादिसर्वाभरणसंयुक्तः श्रीवत्साङ्को द्विभुजो दक्षिण इषु-

---

किंचिद्दक्षिणमाश्रित्य देवस्य स्तनान्तं वोदय सप्ततालवेदाधिकाशीतिमात्रं द्विभुजं दीनमूर्ध्वाननं दक्षिणेनास्यं पिधाय वामहस्तेन स्वपादान्तं निगूह्य तद्वि॰ परीतं जानुमध्यमाकर्णस्थितं कपिराजं कारयेत् । ' इत्यादर्शान्तरे दृश्यते ।

१. हस्तेनास्यमित्येतदनन्तरं पिदधानमिति भवितव्यम् । २. दधानमितिस्यात्

३. एतादृशस्थलेषु यथायोग्यं 'कारयेत् । स' इत्यध्याहार्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

धरो वामे धनुरवलम्ब्य त्रिभङ्गसंस्थितो माघमासे पुनर्वसूजातस्सीतापति रथान्यत्सर्वमादिमूर्तेरिव, रामो[1] दाशरथिं वीरं काकुत्स्थमिति ।

तस्य दक्षिणे सीता हेमाभा शुक्लाम्बरा वामे पद्मधरी दक्षिणहस्तप्रसारिता दक्षिणं स्थितं वाममाकुञ्च्य पादमुद्बन्धकौटिकौन्तलं[2] करण्डिकामकुटसंयुक्ता वा सीताद्यक्षरबीजान्यत्सर्वं [3]श्रीमिव, सीतामयोनिजां लक्ष्मीं वैदेहीमिति ।

वामे सौमित्रिं रक्ताभं श्यामाम्बरं द्विभुजो रामवत्त्रिभङ्गस्थितश्चापधरश्चोद्बन्धकौन्तलयुतो वैशाखे रोहिणीजातो लक्षाद्यक्षरबीजोऽन्यत्सर्वं रामवत्, सौमित्रिं रामानुजं लक्ष्मणं लक्ष्मीवर्धनमिति ।

दक्षिणे भरतश्श्यामाभो रक्ताम्बरोद्बन्धकौन्तलयुतश्शरचापखड्गखेटकधरो द्विभुजस्त्रिभङ्गस्थितश्चैत्रे स्वात्युद्भवो मलेशो भगाद्यक्षरबीजः श्रीवत्सकौस्तुभोऽन्यत्सर्वं रामवत्, भरतं कैकेयीसुतं रामानुजं धर्मचारिणमिति ।

वामे शत्रुघ्नो हेमाभो रक्ताम्बरोद्बन्धकौन्तलयुतो ज्येष्ठमासे धनिष्ठाजातो नामाद्यक्षरबीजो निर्मलेशोऽन्यत्सर्वं लक्ष्मणवत्, शत्रुघ्नं रामप्रियं विजयं भरतानुजमिति ।

---

१. राममिति भवितव्यम्। २. 'उद्बद्धकुटिलकुन्तले' ति भवितव्यम् ।
३. श्रिय इवेति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

दक्षिणे पुरतोऽञ्जनाभः श्वेतवस्त्रधरः कपिरूपस्सर्वाभरणभूषितो द्विभुजो दक्षिणेनास्यं पिधाय वामेन वस्त्रं विधायावनतगात्रस्सीताया वार्ताविज्ञापनपरो मृगवाहनो दण्डध्वजो महानादरवः श्रावणे मासि श्रवणजः कलाद्यक्षरबीजो हनूमन्तः[१] कपिराजं हनूमन्तं शब्दराशिं महामतिमिति ।

दक्षिणे शरं नपुंसकं श्यामाभं श्वेताम्बरं त्रिनेत्रं रौद्रसमुद्रघोषरवं वायुवाहनं पक्षध्वजं शिरसि शरभृतं माघमासे वारुण्यजातं[२] शराद्यक्षरबीजं शरं महारवममोघं तीक्ष्णधारमिति ।

वामे...............................................................

श्वेताभो रक्ताम्बरो............क्तवदन्ना द्विभुजः प्राञ्जलीकृतः[३] पादावनतियुक्तो मृगध्वजवाहनो वैशाख आश्लेषजो मेघरव.........................................................बलमर्तस्तु..................................

कृष्णवर्णो रक्तकेशश्शसदंष्ट्रिणो (?) द्विभुजं शूलधरो हृदयेऽञ्जलिसंयुक्तो मूलजातो मेघवाहनो..........................................

..............विभीषणं राक्षस..........................मनस्कं राम प्रियमिति ।

१. हनूमानिति भवितव्यम् । २. वारुणीजातमिति भवितव्यम् ।
३. प्राञ्जलीकृतहस्त इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

अभिमुखेऽङ्गदश्श्वेताभो रक्ताम्बरो रक्तवक्त्रो द्विभुजः प्राञ्जलीकृतः[1] पादावनत..............................................................
रोहिणीजानस्तुङ्गाग्रक्षरबीजोऽङ्गदं[2] वालिपुत्रं रामभक्तं देवप्रियमिति ।

(वैखानसागम एकविंशपटले ॥)

## बलभद्रराम: ।

अथ बलभद्रराम मध्यमं[3] दशतालमितिं द्विभुजं विनतं दक्षिणहस्तेन मुसलधरं वामेन हलधरं श्वेताभं रक्तवस्त्रधरमुद्बद्धकुन्तलं दक्षिणे रेवतीं देवीं पद्मकिञ्जल्कवर्णां पुष्पाम्बरधरां दक्षिणेन हस्तेन पद्मधरां प्रसारितवामहस्तामेवं कारयेत् । तद्रूपं कौतुकं विष्णुं चतुर्भुजं वा कारयेत् ।

(वैखानसागमे ॥)

बलदेवो हलपाणिर्मदविभ्रमलोचनश्च कर्तव्यः ।
बिभ्रत्कुण्डलमेकं शङ्खेन्दुमृणालगौरवपुः ॥
एकानांशा कार्या देवी बलदेवकृष्णयोर्मध्ये ।
कटिसंस्थितवामकरा सरोजमितरेण चोद्वहती ॥
कार्या चतुर्भुजा सा वामकराभ्यां सपुस्तकं कमलम् ।
द्वाभ्यां दक्षिणपार्श्वे वरमर्थिष्वक्षसूत्रं च ॥

---

१. 'प्राञ्जलीकृतहस्त' इति भवितव्यम् । २. 'स्वङ्गाद्यक्षरबीज' इति स्यात् ।
३. 'मध्यमदशतालमिति 'मिति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

वामेष्वष्टभुजायाः कमण्डलुश्चापमम्बुजं शास्त्रम् ।
वरशरदर्पणयुक्तास्सव्यभुजास्साक्षसूत्राश्च ॥

(बृहत्संहितायामष्टपञ्चाशत्तमाध्याये ॥)

गदालाङ्गलधारी च रामो वाथ चतुर्भुजः ।
वामोर्ध्वे लाङ्गलं दद्यादधश्शङ्खं सुशोभनम् ॥

(अग्निपु० ४९ अ० ॥)

सीरपाणिर्बलः कार्यो मुसली चैव कुण्डली ।
श्वेतोऽतिनीलवसनो मदोदञ्चितलोचनः ॥

(विष्णुधर्मोत्तरे ॥)

कृष्णः ।

कृष्णस्य लक्षणं वक्ष्ये । मध्यमं[1] दशतालमितिं सविंशतिशताङ्गुलं[2] द्विभुजं श्यामाभं रक्तवस्त्रधरं सर्वाभरणभूषितं [3]किरीटिनमुद्बद्धकुन्तलं वा[4] दक्षिणेन[5] हस्तेन क्रीडायष्टिधरं वामोद्यतकरकूर्परहिक्कासूत्रादध-

१. **मध्यमद**शतालेति भवितव्यम् । २. एतद्विशेषणमन्यतरादर्शे न । ३. एतत्पदमन्यतरादर्शे न । ४. एतदन्यतरादर्शे न । ५. दक्षिणेनेत्यारभ्य मार्गेणेत्यन्तस्य स्थाने '**दक्षि**णेन हस्तेन दक्षिणकरकटकाग्रं नाभिदघ्नं वा तस्मात्....................**अन्यत्सर्वं** राघवस्योक्तवत् ।' इत्येवमन्यतरादर्शे दृश्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

स्तादथोर्ध्वकरमन्यत्सर्वं राघवस्योक्तमार्गेण । दक्षिणे रुक्मिणीं देवीं हेमाभां धम्मिल्लकुन्तलयुतामुद्बद्धकुन्तलां[1] वा प्रसारितदक्षिणहस्तां सपद्मवामहस्तां तथा वामपार्श्वे सत्यभामां श्यामाभां [2]शिरोरुहबन्ध-धम्मिल्लयुतामुद्बद्धकुन्तलयुतां[3] वा[4] सोत्पलदक्षिणहस्तां प्रसारितवाम-हस्तां सर्वाभरणसंयुक्तां कारयेत् । देवीभ्यां[5] करण्डिकामकुटं वेति केचित् । देवस्य वामपार्श्वे गरुडं प्राञ्जलीकृत्य सुस्थितं कारयेत् । देवस्य दक्षिणहस्तं लीलायष्टियुतं वामं[6] सशङ्खं वा कारयेत् । तद्रूपं कौतुकं विष्णुं चतुर्भुजं वा कारयेत् ।

( वैखानसागमे ।।)

कृष्णश्चक्रधरः कार्यो नीलोत्पलदलच्छविः ।
इन्दीवरधरा कार्या तस्य साक्षाच्च रुक्मिणी ।।

(।विष्णुधर्मोत्तरे ।।)

---

१. धम्मिल्लेत्यारभ्य सपद्मवामहस्तामित्यन्तस्य स्थाने 'शिरोरुहधम्मिल्ल-युतामुद्बन्धकौन्तलां वामहस्तं दक्षिणं प्रसार्य वामं पद्मे'त्यन्यतरादर्शे दृश्यते । २. धम्मिल्लकुन्तलयुतामिति पाठान्तरम् । ३. एतदन्यतरादर्शे न । ४. वेत्यारभ्य कारयेदित्यन्तस्य स्थाने 'वामहस्तं दक्षिणं सपुष्पं वामं प्रसार्य किंचिद्देवं समीक्ष्य सर्वाभरणसंयुक्तां कारयती' त्येवमन्यतरादर्शे विद्यते । ५. देवीभ्या-मित्यारभ्य देवस्येत्यन्तमन्यतरादर्शे न । ६. 'वामोतकूर्परं सशङ्खं वे'ति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## नवनीतनटः ।

नवनीतनटस्य वामपादमाकुञ्च्य[1] स्थितं दक्षिणमुत्तानकुञ्चितं दक्षिणहस्तमभयं[2] नवनीतयुतं वा[3] वामं प्रसार्योत्तानं[4] सर्वाभरणभूषितमम्बरहीनमम्बरधरायुतं[5] नवनीतनृत्तरूपं कारयेत् ।

## वेणुगोपालः ।

गोपीगोपगोकन्याभिः परिवृतं दक्षिणं सव्ययोद्यतपादं वामं सुस्थितमाहृत्य[6] द्विहस्ताभ्यामङ्गलीषु वेणुविवरान्संयोज्य त्रिभङ्गभङ्गगानरससमान्वित[7] गोपालं गायकम् ।

( वैखानसागमे ॥)

गोपालप्रतिमां कुर्याद्वेणुवादनतत्पराम् ।
बर्हापीडां घनश्यामां द्विभुजामूर्ध्वसंस्थिताम् ॥

(विष्णुधर्मोत्तरे ॥)

## पार्थसारथिः ।

रथारूढं ध्वजाश्वचक्रमुकुलादिरथाङ्गैर्युक्तं रथं कृत्वा पार्थं सचापं प्राञ्जलीकृत्याधस्स्थले स्थितं चोपरि यत्न[8] यष्टिपाशौ गृहीत्वा

---

१. किंचित्संस्थितमिति पाठान्तरम् । २. 'दक्षिणमभी'ति पाठान्तरम् । ३. एतदादर्शान्तरे न । ४. प्रसार्यानुत्तानमिति पाठान्तरम् । ५. 'अम्बराधारयुत'मिति पाठान्तरम् । किं तु 'अम्बरधरं वे'ति स्यात् । ६. एतत्पदात्पूर्वं 'वेणु'मिति स्यात् । ७. 'त्रिभङ्गभङ्गि'भिति स्यात् । ८. 'यन्त्रयष्टिपाशा'विति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

दक्षपादं स्थितं वाममुद्धृत्य रथभित्तौ संस्थाप्य दक्षिणहस्तेन व्याख्यान-निर्णयाङ्गुलिमुद्रया संयुक्तं पार्थसारथिरूपं कारयेत् ।

### मदनगोपालः ।

रक्तवर्णो दशभुजस्सर्वालङ्कारभूषितः ।
शङ्खचक्रगदापद्मपाशाङ्कुशसुमाशुगान् ॥
इक्षुकोदण्डमन्याभ्यां वादयन्वेणुमादरात् ।
षोडशच्छदपद्मस्थष्षट्कोणोपरि संस्थितः ॥
गोपालो मदनाख्योऽयं मन्दस्मितमुखाम्बुजः ।
स्वरपत्रस्थगोपीभिरादरादीक्षितोऽवतात् ॥

(पाञ्चरात्रे ॥)

### कालियाहिमर्दकः ।

एवमेव कालियाहिफणोपरि स्थितं दक्षिणहस्तं सपताकं वाम-करेणाहिपुच्छं संगृह्य नृत्यन्तं कारयेत्। कृष्णरूपाण्यसंख्ययानि वक्तुं न शक्यानि; तस्माद्यथेष्टरूपं कारयेत् ।

### बुद्धः ।

पद्माङ्कितकरचरणः प्रसन्नमूर्तिस्सुनीचकेशश्च ।
पद्मासनोपविष्टः पितेव जगतो भवेद्बुद्धः ॥

(बृहत्संहितायामष्टापञ्चाशत्तमाध्याये ॥)

शान्तात्मा लम्बकर्णश्च गौराङ्गश्चाम्बरावृतः ।
ऊर्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः ॥

(अग्निपु० ४९ अ० ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

काषायवस्त्रसंवीतस्स्कन्धसंसक्तचीवरः ।
पद्मासनस्थो द्विभुजो ध्यायी बुद्धः प्रकीर्तितः ॥
(विष्णुधर्मोत्तरे ॥)

बुद्धः पद्मासनो रक्तस्त्यक्ताभरणमूर्धजः ।
कषायवस्त्रो ध्यानस्थो द्विभुजोकार्द्रपाणिकः (?) ॥
(रूपमण्डने ॥)

कल्की ।

कल्किनं[1] मध्यमं[2] दशतालमितमश्वाकारं मुखमन्यन्नराकारं चतुर्भुजं चक्रशङ्खधरं खड्गखेटकधरमुग्ररूपं भयानकमेवं देवरूपं कृत्वा कौतुकं विष्णुं चतुर्भुजमेव कारयेत् ।
( वैखानसागमे ॥)

धनुस्तूणान्वितः कल्की म्लेच्छोत्सादकरो द्विजः ।
अथवाश्वस्थितः खड्गी शङ्खचक्रशरान्वितः ॥
(अग्निपु० ४९ अ० ॥)

खड्गोद्यतकरः क्रुद्धो हयारूढो महाबलः ।
म्लेच्छोच्छेदकरः कल्की द्विभुजः परिकीर्तितः ॥
(विष्णुधर्मोत्तरे ॥)

कल्की सखड्गोऽश्वारूढो हरेरवतरा इमे ।
(रूपमण्डने ॥)

---

१. कल्किनमित्यारभ्य मुखमन्यादित्येतत्पर्यन्तमन्यतरादर्शे न । २. 'मध्य-मदशतालमित'मिति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# वैष्णवमूर्त्यन्तराणि ।

---

## दत्तात्रेयः ।

मन्दारमूले मणिमण्डपस्थितं सुवर्णदानैकनिबद्धदीक्षम् ।
ध्यायेत्परीतं नवनाथसिद्धैर्दारिद्र्यदावानलकालमेघैः ॥

व्याख्यामुद्रां करसरसिजे दक्षिणे संदधानो
जानुन्यस्तावरकरसरोजातवामोन्नतांसः ।
ध्यानाधारात्सुखपरवशादर्धमामीलिताक्षो
दत्तात्रेयो भसितधवलः पातु नः कृत्तिवासाः ॥

(दत्तात्रेयकल्पे ॥)

वाल्मीकिरूपं सकलं दत्तात्रेयस्य कारयेत् ।

(विष्णुधर्मोत्तरे ॥)

## हरिहरपितामहः ।

एकपीठसमारूढमेकदेहनिवासिनम् ।
षड्भुजं च चतुर्वक्त्रं सर्वलक्षणसंयुतम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

अक्षमालां त्रिशूलं च गदां कुर्याच्च दक्षिणे ।
कमण्डलुं च खट्वाङ्गं चक्रं वामभुजे तथा ॥

(रूपमण्डने ॥)

पुरुषः ।

प्राच्यां पूरुषं प्राङ्मुखं श्वेताभं पीतवाससं श्रीमेदिनीभ्यां संयुक्तं पुरुषं पुरुषात्मकं परं पुरुषं धर्ममयमिति ।

कपिलः ।

आग्नेय्यां कपिलं प्राङ्मुखं श्वेताभोऽष्टहस्तो दक्षिणेनैकमभय-मन्यच्चक्रासिहलधरो[1] वामेनैकं कट्यवलम्बितमन्यच्छङ्खपाशदण्डधरो रक्तवासास्सावित्रीयुक्तं कपिलं मुनिवरं शुद्धं वेदरूपिणमिति ।

(वैखानसागमे ॥)

प्रद्युम्नं विद्धि वैराग्यात्कापिलीं तनुमास्थितः[2] ।
मध्ये तु करकः कार्यस्तस्योत्सङ्गगतः परः ॥

दोर्युगं चापरं तस्य शङ्खचक्रधरं भवेत् ।
पद्मासनोपविष्टश्च ध्यानसंमीलितेक्षणः ॥

कर्तव्यः कपिलो देवो जटामण्डलमण्डितः ।
वायुसंरोधपीनांसः पद्माङ्कचरणद्वयः ॥

---

१. अन्यैर्हस्तैश्चक्रासि हलधर इत्यर्थः । २. एतत्पद्यार्धात्परमर्धेनैकेन विच्छिन्नेन भवितव्यमिति संभाव्यते ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

मृगाजिनधरो राजन्! श्मश्रुयज्ञोपवीतवान् ।
विभुर्मन्त्रमहापद्मकलिकासंस्थितः प्रभुः ॥
वैराग्यभावेन महानुभावो ध्यानस्थितस्त्वं परमं पदं तत् ।
ध्यायंस्तथास्ते भुवनस्य गोप्ता साङ्ख्यप्रवक्ता पुरुषः पुराणः ॥

(विष्णुधर्मोत्तरे ॥)

**यज्ञमूर्तिः ।**

नैर्ऋत्यां पश्चिममुखस्तप्तचामीकराभश्चतुश्शृङ्गो द्विशीर्षस्सप्तहस्तश्शङ्खचक्राज्यदर्वीस्रुक्स्रुवजुहूपधरस्त्रिपादो रक्तवस्त्रस्सर्वाभरणभूषितो दक्षिणवामयोस्स्वाहास्वधायुक्तो यज्ञो, यज्ञेशं सर्वदेवमयं पुण्यं सर्वक्रतुवरमिति ।

(वैखानसागमे ॥)

**व्यासः ।**

कृशः कृष्णतनुर्व्यासः पिङ्गलोऽतिजटाधरः ।
सुमन्तुर्जैमिनिः पैलो वैशम्पायन एव च ॥
तस्य शिष्याश्च कर्तव्याश्चत्वारः पारिपार्श्वकाः ॥

**धन्वन्तरिः ।**

धन्वन्तरिस्सुकर्तव्यस्सुरूपः प्रियदर्शनः ।
करद्वयगतश्चास्य सामृतः कलशो भवेत् ॥

(विष्णुधर्मोत्तरे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## जलशायी ।

जलमध्यगतः कार्यश्शेषपन्नगतल्पगः ।
फणापुञ्जमहारत्नदुर्निरीक्ष्यशिरोधरः ॥

देवदेवस्तु कर्तव्यस्तत्र सुप्तश्चतुर्भुजः ।
तथापरश्च कर्तव्यश्शेषभोगाङ्कसंस्थितः ॥

एकपादोऽस्य कर्तव्यो लक्ष्म्युत्सङ्गगतः प्रभोः ।
तथापरश्च कर्तव्यस्तत्र जानौ प्रसाधितः ॥

कर्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः ।
तथैवान्यः करः कार्यो देवस्य तु शिरोधरः ॥

सन्तानमञ्जरीधारी तथैवास्यापरो भवेत् ।
नाभीसरसि संभूते कमले तस्य यादव ! ॥

सर्वपृथ्वीमयो देवः प्राग्वत्कार्यः पितामहः ।
नाललग्नौ च कर्तव्यौ पद्मस्य मधुकैटभौ ॥

नृरूपधारीणि भुजङ्गमस्य कार्याण्यथास्त्राणि तथा समीपे ।
एतत्तवाग्रे यदुपुङ्गवोक्तं देवस्य रूपं परमस्य तस्य ॥

(विष्णुधर्मोत्तरे ॥)

सत्पुरुपं[1] शेषतल्पे दक्षो दण्डभुजोऽस्य तु ।
शिरोधरोऽस्य वामस्तु सपुष्पोऽयं जलेशयः ॥

---

१. सुप्तरूपमिति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

तन्नाभिपङ्कजे धाता श्रीभूमी च शिरोहिगे ।
निध्यस्त्रादिस्वरूपाणि पार्श्वयोर्मधुकैटभौ ॥

(रूपमण्डने ॥)

## लक्ष्मीनारायणौ ।

लक्ष्मीनारायणौ कार्यौ संयुक्तौ दिव्यरूपिणौ ।
दक्षिणस्था विभोर्मूर्तिर्लक्ष्मीमूर्तिस्तु वामतः ॥
दक्षिणः कण्ठलग्नोऽस्या वामे हस्तस्सरोजभृत् ।
विभोर्वामकरो लक्ष्म्याः कुक्षिभागस्थितस्सदा ॥
सर्वावयवसंपूर्णा सर्वालङ्कारभूषिता ।
सुभ्रुनेत्रकपोलास्या रूपयौवनसंयुता ॥
सिद्धिः कार्या समीपस्था चामरग्राहिणी शुभा ।
कर्तव्यं वाहनं सव्ये देवाधोभागगं सदा ॥
शङ्खचक्रधरौ तस्य द्वौ कार्यौ पुरुषौ पुरः ।
वामनौ हारकेयूरकिरीटमणिभूषणौ ॥
उपांसकौ समीपस्थौ प्रभोर्ब्रह्मशिवात्मकौ ।
रशनां योगपट्टं च शिखामञ्जलिमास्थितौ ॥

(विश्वकर्मशास्त्रे ॥)

उभौ च द्विभुजौ कुर्याल्लक्ष्मीं नारायणाश्रिताम् ।
देवं शस्त्रैस्स्वकीयैश्च गरुडोपरि संस्थितम् ॥





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

दक्षिणः कण्ठलग्नोऽस्या वामो हस्तस्सरोजधृक् ।
विभोर्वामकरो लक्ष्म्याः कुक्षिभागस्थितस्सदा ॥
सर्वेषामेव देवानामेवं युग्मं विधीयते ।
तेषां शक्तिः पृथग्रूपा तदस्त्रवाहनाकृतिः ॥

(रूपमण्डने ॥)

हयग्रीवः ।

मूर्तिमान्पृथिवीहस्तन्यस्तपादस्सितच्छविः ।
नीलाम्बरधरः कार्यो देवो हयशिरोधरः ॥
विद्यात्संकर्षणांशेन देवो हयशिरोधरः ।
कर्तव्योऽष्टभुजो देवस्तत्करेषु चतुर्ष्वथ ॥
शङ्खं चक्रं गदां पद्मं त्वाकारं कारयेद्बुधः ।
चत्वारश्च कराः कार्या वेदानां देहधारिणाम् ॥
देवेन मूर्ध्नि विन्यस्तास्सर्वाभरणधारिणः ।

नरनारायणहरिकृष्णाः ।

दूर्वाश्यामो नरः कार्यो द्विभुजश्च महाबलः ।
नारायणश्चतुर्बाहुर्नीलोत्पलदलच्छविः ॥
तयोर्मध्ये तु बदरी कार्या फलविभूषणा ।
बदर्यामग्रनौ कार्यावक्षमालाधरावुभौ ॥





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

अष्टचक्रे स्थितौ याने सूतयुक्ते मनोरमे ।
कृष्णाजिनधरौ दान्तौ जटामण्डलधारिणौ ॥
पादेन चैकेन रथस्थितेन पादेन चैकेन च जानुगेन ।
कार्यो हरिश्चात्र नरेण तुल्यः कृष्णोऽपि नारायणतुल्यमूर्तिः ॥

(विष्णुधर्मोत्तरे ॥)

वैकुण्ठः ।

वैकुण्ठं तु प्रवक्ष्यामि सोऽष्टबाहुर्महाबलः ।
तार्क्ष्यासनश्चतुर्वक्त्रः कर्तव्यश्शान्तिमिच्छता ॥
गदां खड्गं शरं चक्रं दक्षिणेऽस्य चतुष्टयम् ।
शङ्खं खेटं धनुः पद्मं वामे दद्याच्चतुष्टयम् ॥
अग्रतः पुरुषाकारं नारसिंहं च दक्षिणे ।
अपरं स्त्रीमुखाकारं वाराहास्यं तथोत्तरम् ॥

त्रैलोक्यमोहनः ।

मुखानि पूर्ववत्तस्याप्यथ त्रैलोक्यमोहनः ।
स षोडशभुजस्तार्क्ष्यारूढः प्राग्वच्चतुर्भुजा (?) ॥
गदा चक्राङ्कुशौ बाणं शक्तिश्चक्रं वरं क्रमात् ।
दक्षेषु मुद्गरः पाशश्शार्ङ्गशङ्खाब्जकुण्डिका ॥
शृङ्गी वामेषु हस्तेषु योगमुद्राकरद्वयम् ।
नरं च नारसिंहं च सूकरं कपिलाननम् ॥






CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## अनन्तः ।

अनन्तोऽनन्तरूपस्तु हस्तैर्द्वादशभिर्युतः ।
अनन्तशक्तिसंवीतो गरुडस्थश्चतुर्मुखः ॥
गदाङ्कुपाणचक्राढ्यो वज्राङ्कुशवरान्वितः ।
शङ्खखेटं धनुः पद्मं दण्डपाशौ च वामतः ।

## विश्वरूपः ।

विंशत्या हस्तकैर्युक्तो विश्वरूपश्चतुर्मुखः ।
पताका हलशङ्खौ च वज्राङ्कुशशरास्तथा ॥
चक्रं च बीजपूरं च वरो दाक्षिणबाहुषु ।
पताका दण्डपाशौ च गदाखड्गोत्पलानि च ॥
शृङ्गी मुसलमक्षं च क्रमात्स्युर्वामबाहुषु ।
हस्तद्वये योगमुद्रा चैन (?) गरुडोपरिस्थितः ॥
क्रमान्नरनृसिंहस्त्रीवराहमुखवन्मुखैः ।
(रूपमण्डने ॥)

## योगेश्वरः ।

पद्मासनसमासीनः किंचिन्मीलितलोचनः ।
घोणाग्रे दत्तदृष्टिश्च श्वेतपद्मोपरि स्थितः ॥
वामदक्षिणगौ हस्तावुत्तानावेकभागगौ ।
तत्करद्वयपार्श्वस्थे पङ्केरुहमहागदे ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ऊर्ध्वे करद्वये तस्य पाञ्चजन्यस्सुदर्शनः ।
योगस्वामी स विज्ञेयः पूज्यो मोक्षार्थियोगिभिः ॥

(सिद्धार्थसंहितायाम् ॥)

अथादिमूर्तिविधिं वक्ष्ये । अनन्तोत्सङ्गे समासीनं दक्षिणं प्रसार्य वाममाकुञ्च्य[१] दक्षिणहस्तमनन्तोत्सङ्गे[२] न्यस्य वामं वामजानूर्ध्वे प्रसार्य चतुर्बाहुं शङ्खचक्रधरं फणाभिः पञ्चभिर्वा[३] छन्नमौलिं प्रवालाभं सर्वाभरणभूषितं कृत्वा तद्दक्षिणे भृगुं वामे मार्कण्डेयमेकजानुक्रमेणासयित्वा दक्षिणे ब्रह्माणं वामे शङ्करं च कृत्वा तद्रूपं कौतुकं च कृत्वा प्रतिष्ठोक्तक्रमेण प्रतिष्ठां कारयेत् ।

( वैखानसागमे ॥)

धर्मः ।

चतुर्वक्त्रश्चतुष्पादश्चतुर्बाहुस्सिताम्बरः ।
सर्वाभरणवांछ्वेतो धर्मः कार्यो विजानता ॥
दक्षिणे चाक्षमाला च तस्य वामे च पुस्तकम् ।
मूर्तिमान्व्यवसायस्तु कार्यो दक्षिणभागतः ॥

---

१. 'दक्षिणपादमाकुञ्च्य वामं प्रसार्ये'ति पाठान्तरम् । २. 'तदनोर्ध्वे' इति पाठान्तरम् । ३. 'फणान् पञ्च सप्त वा' इति पाठान्तरम् । फणाभिः पञ्चभिस्सप्तभिर्वा इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

वामभागे ततः कार्यो वृषः परमरूपवान् ।
कार्यौ पद्मकरौ मूर्ध्नि विन्यस्तौ तु तथा तयोः ॥

(आदित्यपुराणे ॥)

## चतुर्विंशतिमूर्तयः ।

शङ्खचक्रगदापद्मी केशवाख्यो गदाधरः ।
नारायणः पद्मगदाचक्रशङ्खायुधैः क्रमात् ॥

माधवश्चक्रशङ्खाभ्यां पद्मेन गदया भवेत् ।
गदाब्जशङ्खचक्री वा गोविन्दाख्यो गदाधरः ॥

पद्मशङ्खारिगदिने विष्णुरूपाय वै नमः ।
सशङ्खाब्जगदाचक्रमधुसूदनमूर्तये ॥

नमो गदारिशङ्खाब्जयुक्तत्रिविक्रमाय च ।
सारिकौमोदकीपद्मशङ्खवामनमूर्तये ॥

चक्राब्जशङ्खगदिने नमः श्रीधरमूर्तये ।
हृषीकेशस्सारिगदाशङ्खपद्मिन्नमोऽस्तु ते ॥

साब्जशङ्खगदाचक्रपद्मनाभस्वमूर्तये ।
दामोदर ! शङ्खगदाचक्रपद्मिन्नमोऽस्तु ते ॥

शङ्खाब्जचक्रगदिने नमस्संकर्षणाय च ।
सारिशङ्खगदाब्जाय वासुदेव ! नमोऽस्तु ते ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

शङ्खचक्रगदाब्जादिधृतप्रद्युम्नमूर्तये ।
नमोऽनिरुद्धाय गदाशङ्खाब्जारिविधारिणे ॥

साब्जशङ्खगदाचक्रपुरुषोत्तममूर्तये ।
नमोऽधोक्षजरूपाय गदाशङ्खारिपद्मिने ॥

नृसिंहमूर्तये पद्मगदाशङ्खारिधारिणे ।
पद्मारिशङ्खगदिने नमोऽस्त्वच्युतमूर्तये ॥

गदाब्जारिसशङ्खाय नमः श्रीकृष्णमूर्तये ।
(पद्मपुराणे पातालखण्डे ॥)

केशवः कमलं कम्बु धत्ते चक्रं गदामपि ।
नारायणः कम्बुपद्मगदाचक्रधरो भवेत् ॥

माधवस्तु गदां चक्रं शङ्खं वहति पङ्कजम् ।
गोविन्दो धरते चक्रं गदां पद्मं च कम्बुना ॥

विष्णुः कौमोदकीं पद्मं पाञ्चजन्यं सुदर्शनम् ।
मधुसूदनस्तु चक्रं शङ्खं सरसिजं गदाम् ॥

त्रिविक्रमोऽम्बुजगदाचक्रशङ्खान्बिभर्ति यः ।
वामनश्शङ्खभृच्चक्रगदापद्मलसत्करः ॥

श्रीधरो वारिजं चक्रं गदां शङ्खं दधाति यः ।
हृषीकेशो गदां चक्रं पद्मं शङ्खं च धारयेत् ॥

पद्मनाभः पाञ्चजन्यं पद्मं चक्रं गदामपि ।
दामोदरोऽम्बुजं शङ्खं गदां धत्ते सुदर्शनम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

संकर्षणो गदाकम्बुसरसीरुहचक्रभृत् ।
वासुदेवो गदाशङ्खचक्रपद्मधरो मतः ॥

प्रद्युम्नश्चक्रभृच्छङ्खगदाम्भोजानि पाणिभिः ।
अनिरुद्धो लसच्चक्रगदाशङ्खारविन्दवान् ॥

पुरुषोत्तमस्तु चक्रं पद्मशङ्खगदा दधत् ।
अधोक्षजस्सरसिजं गदाशङ्खसुदर्शनम् ॥

नरसिंहस्तु चक्राब्जगदाकम्बुविराजितः ।
अच्युतस्तु गदापद्मचक्रशङ्खैस्समन्वितः ॥

जनार्दनोऽम्बुजं चक्रं कम्बु कौमोदकीं दधत् ।
उपेन्द्रो वहते शङ्खं गदां चक्रं कुशेशयम् ॥

हरिर्धारयते कम्बु चक्रं तामरसं गदाम् ।
कृष्णः करैः पाञ्चजन्यं गदामब्जं सुदर्शनम् ॥

एतास्तु मूर्तयो ज्ञेया दक्षिणाधःकरात्क्रमात् ।
वासुदेवादिवर्णास्स्युष्षटषडेते तदादयः ॥

(रूपमण्डने ॥)

## मानुषवासुदेवः ।

अथ मानुषं वासुदेवमायताश्रे[1] विमाने मध्यमं[2] दशतालमितं सविंशतिशताङ्गुलं द्विभुजं चक्रशङ्खधरं दक्षिणे रुक्मिणीं देवीं तद्दक्षिणे

---

१. 'वासुदेवमाश्रये'दिति पाठान्तरम् । २. मध्यमदशतालेति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

हलमुसलधरं[1] बलभद्रं तद्दक्षिणे प्रद्युम्नं द्विभुजं क्षुरिकाधरदक्षिणहस्तं कट्यवलम्बितवामहस्तं तद्दक्षिणे विरिञ्चं चतुराननं चतुर्भुजं देवस्य वामपार्श्वेऽनिरुद्धं[2] द्विभुजं खड्गखेटकधरं तद्वामे साम्बं द्विभुजं दान-दक्षिणकर[3]मन्यद्दण्डधरं[4] तस्य वामे गरुडं च कारयेत् । तेषां वर्णाम्बराभरणानि भृगूक्तविधिना कारयेत् । देवानेतान्स्थितानेव संस्थाप्य तद्रूपं[5] कौतुकं कारयेत् । अथवा तेषां मध्ये विष्णुं चतुर्भुजमेव स्थापयेत् ।

## दैविकवासुदेवः ।

दैविकवासुदेवं सिंहासने समासीनं चतुर्भुजं शङ्खचक्रधरं श्रीभूम्या[6] सहितं तथा देवस्य दक्षिणवामयोः पूर्वोक्तान्देवान्बलभद्रस्य दक्षिणे[7] देवीं रेवतीं प्रद्युम्नस्य दक्षिणे[8] रोहिणीमनिरुद्धस्योषां[9] साम्बस्येन्दुकरीं च[10] सहैव [11] स्थापयेत् । एतेषां कौतुकबिम्बं पूर्ववत ।

(वैखानसागमे ।)

---

१. 'हलधारायुत'मिति पाठान्तरम् । २. 'नीलमर्ध' मिति पाठान्तरम् । ३. 'दक्षिणे दारुक'मिति पाठान्तरम् । ४. एतदादर्शान्तरे न । ५. 'तदूर्ध्वे'मिति पाठान्तरम् । ६. 'श्रीभूमिभ्या' मिति भवितव्यम् । ७ एतदादर्शान्तरे न । ८. एतदन्यतरादर्शे न ९. 'अनिरुद्धस्य रामा'मिति पाठान्तरम् । १०. साम्बस्येषान्दुकरीं चे'ति पाठान्तरम् । ११. 'सभवा' इति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

दक्षिणे तु करे चक्रमधस्तात्पद्ममेव च ।
वामे शङ्खं गदाधस्ताद्वासुदेवस्य लक्षणम् ॥
श्रीपुष्टी चापि कर्तव्ये पद्मवीणाकरान्विते ।
ऊरुमात्रोच्छ्रितायामे मालाविद्याधरौ तथा ॥
प्रभामण्डलसंस्थौ तौ प्रभा हस्त्यादिभूषणौ[1] ।
पद्माभं पादपीठं तु प्रतिमास्वेवमाचरेत् ॥

(अग्निपु० १०४ अ० ॥)

एकवक्त्रश्चतुर्बाहुस्सौम्यरूपस्सुदर्शनः ।
पीताम्बरश्च मेघाभस्सर्वाभरणभूषितः ॥
कण्ठेन शुभदेशेन कम्बुतुल्येन राजता ।
वराभरणयुक्तेन कुण्डलोत्तरभूषिणा ॥
अङ्गदी बद्धकेयूरी वनमालाविभूषणः ।
उरसा कौस्तुभं बिभ्रत्किरीटं शिरसा तथा ॥
शिरःपद्मस्तथैवास्य कर्तव्यश्चारुकर्णिकः ।
पुष्टिश्लिष्टायतभुजस्तनुस्ताम्रनखाङ्गुलिः ॥
मध्येन त्रिवलीभङ्गशोभितेन सुचारुणा ।
स्त्रीरूपधारिणी क्षोणी कार्या तत्पादमध्यगा ॥

---

१. 'हस्त्यादिभूषणा' इति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

तत्करस्थाङ्घ्रियुगलो देवः कार्यो जनार्दनः ।
तालान्तरपदन्यासः किंचिन्निष्क्रान्तदक्षिणः ॥

अनुदृश्या (?) मही कार्या देवदर्शितविस्मिता ।
देवश्च कटिवासेन कार्यो जान्ववलम्बिना ॥

वनमाला च कर्तव्या देवजान्ववलम्बिनी ।
यज्ञोपवीतं कर्तव्यं नाभिदेशमुपागतम् ॥

उत्फुल्लकमलं पाणौ कुर्याद्देवस्य दक्षिणे ।
वामपाणिगतं शङ्खं शङ्खाकारं तु कारयेत् ॥

दक्षिणे तु गदा देवी तनुमध्या सुलोचना ।
स्त्रीरूपधारिणी मुग्धा सर्वाभरणभूषिता ॥

पश्यन्ती देवदेवेशं कार्या चामरधारिणी ।
कुर्यात्तन्मूर्ध्नि विन्यस्तं देवहस्तं तु दक्षिणम् ॥

वामभागगतश्चक्रः कार्यो लम्बोदरस्तथा ।
सर्वाभरणसंयुक्तो वृत्तविष्फारितेक्षणः ॥

कर्तव्यश्चामरकरो देववीक्षणतत्परः ।
कुर्याद्देवकरं वामं विन्यस्तं तस्य मूर्धनि ॥

(विष्णुधर्मोत्तरे ।)

वासुदेवस्संकर्षणः प्रद्युम्नश्चानिरुद्धकः ।
श्वेतरक्तपीतकृष्णाः क्रमात्कृतयुगादिषु ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पूज्या द्विजातिभिश्चैषां छत्राभं कुर्कुटाण्डवत् ।
त्रपुषाभं च बालेन्दूपमं कुर्याच्चिरं[१] क्रमात् ॥

(रूपमण्डने ॥)

संकर्षणः ।

वासुदेवस्वरूपेण कार्यस्संकर्षणः प्रभुः ।
स तु शुक्लवपुः कार्यो नीलवासा यदूत्तम ! ॥

गदास्थाने च मुसलं चक्रस्थाने च लाङ्गलम् ।
कर्तव्यौ तनुमध्यौ तु नृरूपौ रूपसंयुतौ ॥

प्रद्युम्नः ।

वासुदेवस्वरूपेण प्रद्युम्नश्च तथा भवेत् ।
स तु दूर्वाङ्कुरश्यामास्सितवासा विधीयते ॥

चक्रस्थाने भवेच्चापो गदास्थाने तथा शरः ।
तथाविधौ तौ कर्तव्यौ यथा मुसललाङ्गलौ ॥

चापबाणधरः कार्यः प्रद्युम्नश्च सुदर्शनः ।
राजन्निन्द्रमणिश्यामश्श्वेतवासा मदोत्कटः ॥

अनिरुद्धः ।

एतदेव तथा रूपमनिरुद्धस्य कारयेत् ।
पद्मपत्राभवपुषो रक्ताम्बरधरस्य तु ॥

---

१. 'कुर्याच्छिर' इति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

प्रतिमालक्षणानि ।

चक्रस्थाने भवेच्चर्म गदास्थानेऽसिरेवच ।
चर्म स्याच्चक्ररूपेण प्रांशुः खड्गो विधीयते ॥

चक्रादीनां स्वरूपाणि किंचित्पूर्वं सुदर्शयेत् ।
रम्याण्यायुधरूपाणि चक्रादीन्येव यादव ! ॥

वामपार्श्वगताः कार्या देवानां प्रवरा ध्वजाः ।
सुपताकायुता राजन् ! यष्टिस्थास्ते यथेरितम् ॥

अनिरुद्धसाम्बौ ।

कर्तव्यश्चानिरुद्धोऽपि खड्गचर्मधरः प्रभुः ।
साम्बः कार्यो गदाहस्तस्सुरूपश्च विशेषतः ॥

साम्बानिरुद्धौ कर्तव्यौ पद्माभौ रक्तवाससौ ।

(विष्णुधर्मोत्तरे ॥)

साम्बप्रद्युम्नौ ।

साम्बश्च गदाहस्तः प्रद्युम्नश्चापभृत्सुरूपश्च ।
अनयोस्स्त्रियौ च कार्ये खेटकनिस्त्रिंशधारिण्यौ ॥

(बृहत्संहितायामष्टापञ्चाशत्तमाध्याये ॥)

विष्णुः ।

विष्णुः किरीटमकुटकटिसूत्रविभूषितः ।
पीताम्बरधरस्सौम्यश्चतुर्भुजसमन्वितः ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

अभयं दक्षिणं हस्तं कटकं वामहस्तकम् ।
परहस्ते तु वामे तु शङ्खं चक्रं च दक्षिणे ॥

पद्मपीठोपरिष्टात्तु सस्यश्यामनिभाकृतिः ।
आसीनो वा स्थितो वापि सव्येऽसव्ये श्रियान्वितः ॥

संयुक्तः केवलो वापि कर्त्तव्यं विष्णुमूर्त्तिनम् ।

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

शङ्खचक्रधरं देवं पीताम्बरधरं हरिम् ।
श्रीभूमिसहितं देवं सर्वालङ्कारसंयुतम् ॥

स्थितं वाथ समासीनं शयितं वापि कारयेत् ।

(सुप्रभेदागमे चतुस्त्रिंशत्तमपटले ॥)

कार्योऽष्टभुजो भगवांश्चतुर्भुजो द्विभुज एव वा विष्णुः ।
श्रीवत्साङ्कितवक्षाः कौस्तुभमणिभूषितोरस्कः ॥

अतसीकुसुमश्यामः पीताम्बरनिवसनः प्रसन्नमुखः ।
कुण्डलकिरीटधारी पीनगलोरस्स्थलांसभुजः ॥

खड्गगदाशरपाणिर्दक्षिणतश्शान्तिदश्चतुर्थकरः ।
वामकरेषु च कार्मुकखेटकचक्राणि शङ्खश्च ॥

अथ च चतुर्भुजमिच्छति शान्तिद एको गदाधरश्चान्यः ।
दक्षिणपार्श्वे ह्येवं वामे शङ्खश्च चक्रं च ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

द्विभुजस्य तु शान्तिकरो दक्षिणहस्तोऽपरश्च शङ्खधरः ।
एवं विष्णोः प्रतिमा कर्तव्या भूतिमिच्छद्भिः ॥

(बृहत्संहितायामष्टापञ्चाशत्तमाध्याये ॥)

देवदेवं यथा विष्णुं कारयेद्गरुडस्थितम् ।
कौस्तुभोद्भासितोरस्कं सर्वाभरणधारिणम् ॥

सजलाम्बुदसच्छायं पीतदिव्याम्बरं तथा ।
मुखानि चास्य चत्वारि बाहवो द्विगुणास्तथा ॥

सौम्येन्दुवदनं पूर्वं नारसिंहं तु दक्षिणम् ।
कपिलं पश्चिमं वक्त्रं तथा वाराहमुत्तरम् ॥

तस्य दक्षिणहस्तेषु बाणारिमुसलाभयम् ।
चर्म सीरवराविन्दु[1]र्वामे च वनमालिनः ॥

कार्याणि विष्णोर्धर्मज्ञ ! वामहस्तेष्वनुक्रमात् ।

लोकपालविष्णुः ।

एकवक्त्रो द्विबाहुश्च गदाचक्रधरः प्रभुः ।

विष्ण्वायतनम् ।

दक्षिणे पुण्डरीकाक्षं पूर्वे नारायणं न्यसेत् ।
गोविन्दः पश्चिमे स्थाप्य उत्तरे मधुसूदनः ॥

---

१. वाचस्पत्ये विष्णुलक्षणप्रदर्शनावसरे 'अरि चक्रं इन्दुश्शङ्ख' इति विवरणं कृतम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ईशाने स्थापयेद्विष्णुमाग्नेय्यां तु जनार्दनम् ।
नैर्ऋत्ये पद्मनाभं च वायव्ये माधवं तथा ॥

केशवो मध्यतस्स्थाप्यो वासुदेवोऽथवा बुधैः ।
संकर्षणो वा प्रद्युम्नोऽनिरुद्धो वा यथाविधि ॥

दशावतारसंयुक्तस्स्थाप्यो जलशयोऽथवा ।
अग्रतस्सूकरस्स्थाप्यस्सर्वदेवमयश्शुभः ॥

विष्णोः प्रतीहाराः ।

प्रतीहारांस्ततो वक्ष्ये दिशां चतसृणां क्रमात् ।
वामनाकाररूपास्ते कर्तव्यास्सर्वतश्शुभाः ॥

तर्जनीं शङ्खचक्रे च चण्डो दण्डं दधत्क्रमात् ।
वामे स्थाप्यः प्रचण्डोऽस्त्रापसव्ये दक्षिणे शुभः ॥

पद्मं खड्गं खेटकं च करैर्बिभ्रद्गदां जयः ।
विलोमे पद्मगदयोर्विजयस्तौ क्रमान्न्यसेत् ॥

तर्जनी बाणचापं च गदां धाता तु सृष्टतः (?) ।
गदापसव्ये तैरस्त्रैर्विधाता वामदक्षयोः ॥

तर्जनी कमलं शङ्खं गदां भद्रः क्रमाद्दधत् ।
शस्त्रापसव्ययोगेन सुभद्रस्तौ क्रमान्न्यसेत् ॥

(रूपमण्डने ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## गरुडः ।

ताक्ष्र्यो मरकतप्रख्यः कौशिकाकारनासिकः ।
चतुर्भुजस्तु कर्तव्यो वृत्तनेत्रमुखस्तथा ॥

गृध्रोरुजानुचरणः पक्षद्वयविभूषितः ।
प्रभासंस्थानसौवर्णकलापेन विराजितः ॥

छत्रं तु पूर्णकुम्भं च करयोस्तस्य कारयेत् ।
करद्वयं तु कर्तव्यं तथा विरचिताञ्जलि ॥

यदास्य भगवान्पृष्ठे छत्रकुम्भधरौ करौ ।
न कर्तव्यौ तु कर्तव्यौ देवपादधरौ शुभौ ॥

किंचिल्लम्बोदरः कार्यस्सर्वाभरणभूषितः ।

(विष्णुधर्मोत्तरे ॥)

उपेन्द्रस्याग्रतः पक्षी गुडाकेशः कृताञ्जलिः ।
सव्यजानुगतो भूमौ मूर्ध्ना च फणिमण्डितः ॥

स्थूलजङ्घो नरग्रीवस्तुङ्गनासो नराङ्गकः ।
द्विबाहुः पक्षयुक्तश्च कर्तव्यो विनतासुतः ॥

(श्रीतत्वनिधौ ॥)

आजानूत्तप्तहेमप्रभमथ [च*] हिमप्रख्यमानाभि साक्षा-
दाकण्ठात्कुङ्कुमाभं भ्रमरकुलसमश्यामलं मूर्ध्नि शान्तम् ।



10

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

व्याप्तब्रह्माण्डगर्भं द्विभुजमभयदं पिङ्गनेत्रोग्रतारं
ताक्ष्यँ नीलाम्रनासद्युतिविविधमहापक्षलक्ष्यं नमामि ॥
पालादेवो[1] गरुत्मानमृतघटगदाशङ्खचक्रासिनागा-
न्बिभ्राणः कृष्णपादो निजकरकमलैरष्टभिस्स्वर्णवर्णः ।
पापघ्नैः पक्षपातैरखिलविषहरैराश्रितार्तिघ्नवृत्तः
श्रीमान्वा पन्नगारिस्सकलविषभयाद्रत्नजालोज्ज्वलाङ्गः ॥

(शिल्परत्ने ॥)

१. 'पायाद्देवो' इति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# आयुधपुरुषाः ।

आयुधपुरुषाः ।

दशायुधप्रतिष्ठां तु वक्ष्ये लक्षणपूर्वकम् ।
वज्रं शाक्तिं[1] च दण्डं च खड्गं पाशं तथाङ्कुशम् ॥

गदा त्रिशूलं पद्मं च चक्रं चेति दशायुधम् ।
एकवक्त्रं द्विनेत्रं च करण्डमकुटान्वितम् ॥

कृताञ्जलिपुटोपेतं द्विबाहुं सर्वलक्षणम् ।
प्रतिमालक्षणप्रोक्तमानेनैव समाचरेत् ॥

जाये शक्तिगदे ज्ञेये चक्रपद्मे नपुंसके ।
शेषाः पुमांसो विज्ञेयास्त्वष्टतालविनिर्मिताः ॥

स्वमूर्तायुधसंयुक्तास्स्वक्रिया[2]देकतालतः ।
तालाष्टांशविवृद्ध्या तु चतुस्तालावसानकम् ॥

कल्पयेदायुधं विद्वानस्त्रवर्गोक्तमार्गतः ।
तेषां मूर्ध्न्यायुधं कार्यमथवा मकुटोपरि ॥

---

१. शक्तिश्चेति भवितव्यम् । २. स्वकीयादिति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

हस्तयोरन्तरे वापि वामेतरकरेऽपि वा ।
परित्यज्याङ्कुशं यद्वा तत्स्थाने कल्पयेद्ध्वजम् ॥

(उत्तरकामिकागमे अष्टषष्टितमपटले ॥)

शक्तिस्तु योषिदाकारा लोहिताङ्गी वृकाश्रिता ।
दण्डोऽपि पुरुषः कृष्णो घोरो लोहितलोचनः ॥
खड्गश्च पुरुषश्श्यामशरीरः क्रुद्धलोचनः ।
पाशस्सप्तफणस्सर्पपुरुषः पुच्छसंयुतः ॥
ध्वजस्तु पुरुषः पीतो व्यावृतास्यो महाबलः ।
गदा पीतप्रभा कन्या सुपीनजघनस्थला ॥
त्रिशूलं पुरुषो दिव्यस्सुभ्रूश्श्यामकलेबरः ।
शङ्खोऽपि पुरुषो दिव्यश्शुक्लाङ्गश्शुभलोचनः ॥
हेतिर्बहुतिथी(?) सा स्त्री भिन्दिश्श्यामतनुः पुमान् ।
शरस्स्यात्पुरुषो दिव्यो रक्ताङ्गो दिव्यलोचनः ॥
धनुस्स्त्री पद्मरक्ताभा मूर्ध्नि पूरितचापभृत् ।
एवमस्त्राणि पूतानि जानीयात्परमेश्वरे ॥
उक्तानां चैव सर्वेषां मूर्ध्नि स्वायुधलाञ्छनम् ।
भुजौ द्वौ तु प्रकर्तव्यौ स्कन्दलग्नौ[1] सदा बुधैः ॥

(विष्णुधर्मोत्तरे ॥)

---

१. स्कन्धलग्नाविति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

वज्रं शक्तिं[1] च दण्डं च खड्गं पाशं तथाङ्कुशम् ।
गदा त्रिशूलं चक्रं च पद्मं चेति दशायुधम् ॥
द्विभुजाश्च द्विनेत्राश्च सर्वाभरणसंयुताः ।
कृताञ्जलिपुटोपेताः करण्डमकुटान्विताः ॥
तत्तद्वक्त्रप्रमाणेन अस्त्रमूर्तिसमन्विताः ।
नानावर्णसमायुक्तं नीलजीमूतवर्णकम् ॥
नीलकं पद्मरागं च तुषारं चेन्द्रनीलकम् ।
शारदाभ्रं च रक्तं च वज्रादीनां तु वर्णकम् ॥
जाया[2] शक्तिगदा विद्यात्पाशपद्मे नपुंसके ।
शेषाः पुमानिति ख्याताः कीर्तितास्त्वस्त्रमूर्तयः ॥

(पूर्वकारणागमे चतुर्दशपटले ॥)

## सुदर्शनपुरुषः ।

चक्रं शङ्खं च चापं परशुमसिमिषुं शूलपाशाङ्कुशाग्निं
बिभ्राणं खड्गखेटं हलमुसलगदाकुन्तमत्युग्रदंष्ट्रम् ।
ज्वालाकेशं त्रिनेत्रं कनकमयलसद्गात्रमत्युग्ररूपं
वन्दे षट्कोणसंस्थं सकलरिपुजनप्राणसंहारचक्रम् ॥

(शिल्परत्ने ॥)

---

१. शक्तिश्चेति भवितव्यम् । २. जाये शक्तिगदे इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ज्योतिश्चूडालमौलिस्त्रिनयनवदनष्षोडशोत्तुङ्गबाहुः
प्रत्यालीढेन तिष्ठन्प्रणवशशधराधारषट्कोणवर्ती ।
निस्सीमेन स्वभूम्ना निखिलमपि जगत्क्षेमवन्निर्मिमाणो
भूयात्सौदर्शनो वः प्रतिभटपरुषः पूरुषः पौरुषाय ॥ ७५ ॥

उग्रंपश्याक्षमुचद्भ्रुकुटि समकुटं कुण्डलि स्पष्टदंष्ट्रं
चण्डास्त्रैर्बाहुदण्डैर्लसदनलसमक्षौमलक्ष्योरुकाण्डम् ।
प्रत्यालीढस्थपादं प्रथयतु भवतां पालनव्यग्रमग्रे
चक्रेशोऽकालकालेरितभटविकटाटोपलोपाय रूपम् ॥ ७९ ॥

चक्रं कुन्तं कृपाणं परशुहुतवहावङ्कुशं दण्डशक्ती
शङ्खं कोदण्डपाशौ हलमुसलगदा वज्रशूलांश्च हेतीन् ।
दोर्भिस्सव्यापसव्यैर्दधदतुलबलस्तम्भितारातिदर्पै-
र्व्यूहस्तेजोऽभिमानी नरकविजयिनो जृम्भतां संपदे वः ॥८०॥

(सुदर्शनशतके ॥)

---



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# आदित्याः ।

आदित्याः ।

द्विभुजाः पद्महस्ताश्च रक्तपद्मासने स्थिताः ।
रक्तमण्डलसंयुक्ताः करण्डमकुटान्विताः ॥

रक्ताम्बरधरास्सर्वे सर्वाभरणभूषिताः ।
छन्नवीरसमायुक्ता भास्करा द्वादशा इमे ॥

वैवस्वतो विवस्वांश्च मार्ताण्डो भास्करो रविः ।
लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः ॥

आदित्यश्च तथा सूर्यः अंशुमांश्च दिवाकरः ।
एते वै द्वादशादित्याश्चोत्तरादिक्रमात्स्थिताः ॥

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

---

अर्यमा चेन्द्रवरुणौ पूषा विष्णुर्भगस्तथा ।
अजघन्यो जघन्यश्च मित्रो धाता इति स्मृताः ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

विवस्वांश्चैव पर्जन्यस्त्वादित्या द्वादश स्मृताः ।
द्विभुजाः पद्महस्ताश्च रक्तपद्मासने स्थिताः ॥

रश्मिमण्डलसंयुक्तास्सुरक्ता लोकनायकाः ।

(सुप्रभेदागमे अष्टचत्वारिंशत्तमपटले ॥)

अदितेः पुत्रभावत्वादादित्यस्यति[1] चोच्यते ।
ईश्वरस्यार्धभागे तु जगश्चक्षुरिति[2] स्मृतः ॥

द्विभुजं पद्महस्तं तु रक्तवर्णं सुरूपकम् ।
करण्डमकुटोपेतं सर्वाभरणभूषितम् ॥

मकुटद्विगुणं तारं प्रभामण्डलमध्यमम् ।
उषाश्च प्रत्युषोदेवी सव्यासव्ये तु संस्थितः[3] ॥

अरुणं चाग्रतः कृत्वा पङ्कजं[4] तत्स्वरूपकम् ।
सप्ताश्वरथमध्यस्थं भास्वरं पापनाशनम् ॥

रक्तपद्मासनस्थं हि आसनं तत्र कल्पयेत् ।
पूर्वोक्तविधिना सर्वमादित्यं परिकल्पयेत् ॥

(सुप्रभेदागमे एकोनपञ्चाशत्तमपटले ॥)

---

१. 'स्त्विति' इति भवितव्यम् । २. 'जगच्चक्षु'रिति स्यात् ।
३. 'संस्थिते' इति भवितव्यम् । ४. 'पङ्कवदि'ति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

रक्तवर्णो महातेजा द्विबाहुः पद्मभृद्रविः ।
सप्तभिस्तुरगैर्युक्ते सर्वरज्जुसमन्विते ॥

एकचक्रे रथे तिष्ठन्पादाक्रान्तसरोरुहः ।
माणिक्यकुण्डलोपेतः पद्मरागकिरीटकः ॥

रक्ताम्बरधरो रम्यस्सुव्यक्ताङ्गो मनोहरः ।
अनूरुसारथिः कार्यः प्रतिहारौ च पार्श्वयोः ॥

मण्डलपिङ्गलनामानौ[1] खड्गखेटकधारिणौ ।

(शिल्परत्ने पञ्चविंशाध्याये ॥)

नासाललाटजङ्घोरुगण्डवक्षांसि चोन्नतानि रवेः ।
कुर्यादुदीच्यवेषं गूढं पादादुरो यावत् ॥

बिभ्राणस्स्वकररुहे पाणिभ्यां पङ्कजे मुकुटधारी ।
कुण्डलभूषितवदनः प्रलम्बहारो वियद्गवृतः ॥

कमलोदरद्युतिमुखः कञ्चुकगुप्तस्स्मितप्रसन्नमुखः ।
रत्नोज्वलप्रभामण्डलश्च कर्तुश्शुभकरोऽर्कः ॥

सौम्या तु हस्तमात्रा वसुदा हस्तद्वयोच्छ्रिता प्रतिमा ।
क्षेमसुभिक्षाय भवेत्त्रिचतुर्हस्तप्रमाणायाम् ॥

(बृहत्संहितायामष्टापञ्चाशत्तमाध्याये ॥)

---

१. पादेऽस्मिन्नधिकाक्षरसद्भावान्मत्स्यपुराणवचने च दण्डपिङ्गलाख्य पुरुषद्वयस्य सूर्यपार्श्ववर्तित्वकथनादत्रापि 'दण्डपिङ्गलनामानौ' इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

श्रृणु वत्स ! प्रवक्ष्यामि सूर्यभेदांस्तु ते जय ! ।
यावत्प्रकाशकस्सूर्यो[१] जायते मूर्तिभिर्यथा ॥

दक्षिणे पौष्करी माला करे वामे कमण्डलुः ।
पद्माभ्यां शोभितकरा सा धात्री प्रथमा स्मृता ॥

शूलं वामकरे चाख्या दक्षिणे सोम एव च ।
मैत्री नाम त्रिनयना कुशेशयविभूषिता ॥

प्रथमे तु करे चक्रं तथा वामे च कौमुदी ।
मूर्तिरार्यमणी ज्ञेया सपद्मैः पाणिपल्लवैः ॥

अक्षमाला करे सव्ये चक्रं वामे प्रतिष्ठितम् ।
सा मूर्ती रौद्री ज्ञातव्या प्रधाना पद्मभूषिता ॥

चक्रं तु दक्षिणे यस्या वामे पाशस्सुशोभनः ।
सा वारुणी भवेन्मूर्तिः पद्मव्यग्रकरद्वया ॥

कमण्डलुर्दक्षिणतो माला चाक्षमयी भवेत् ।
सा भवेत्सम्मता सूर्यमूर्तिः पद्माविभूषिता ॥

यस्या दक्षिणतश्शूलं वामहस्ते सुदर्शनः ।
भगमूर्तिस्समाख्याता पद्महस्ता शुभा जय ! ॥

अथ वामकरे माला त्रिशूलं दक्षिणे स्मृतम् ।
विवस्वन्मूर्तिरेषा स्यात्पद्मालाञ्छनलक्षिता ॥

---

१. 'जगत्प्रकाशकः' इति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पूषाख्यस्य भवेन्मूर्तिर्द्विभुजा पद्मलाञ्छिता ।
सर्वपापहरा ज्ञेया सर्वलक्षणलक्षिता ॥

दक्षिणे तु गदा यस्या वामे चैव सुदर्शनः ।
पद्मव्यग्रा तु सावित्री मूर्तिस्सर्वार्थसाधनी ॥

स्रुचं च दक्षिणे हस्ते वामे होमजकालिकाम् ।
मूर्तिस्त्वाष्ट्री भजेत्सा स्यात्पद्मरुद्धकरद्वया ॥

सुदर्शनकरा सव्ये पद्महस्ता तु वामतः ।
एषा स्याद् द्वादशी मूर्तिर्विष्णोरमिततेजसः ॥

धाता मित्रोऽर्यमा रुद्रो वरुणस्सूर्य एव च ।
भगो विवस्वान्पूषा च सविता दशमस्स्मृतः ॥
एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ।

(विश्वकर्मशास्त्रे ॥)

रविः कार्यश्शुभश्मश्रुः सिन्दूरारुणसुप्रभः ।
आपीच्य[1] वेषस्त्वाकारस्सर्वाभरणभूषितः ॥

चतुर्बाहुर्महातेजाः कवचेनाभिसंवृतः ।
कर्तव्या रशना चास्य पानीयाङ्गेति संज्ञिताः ॥

---

१. बृहत्संहितायां सूर्यस्य उदीच्यवेषकथनात् अत्रापि 'उदीच्यवेष' इति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

रश्मयस्तस्य कर्तव्या वामदक्षिणहस्तयोः ।
ऊर्ध्वे स्रग्दामसंस्थाना सर्वपुष्पचिता शुभा ॥

स्वरूपरूपस्स्वाकारो दण्डः कार्योऽस्य वामतः ।
दक्षिणे पिङ्गले[१] भागे कर्तव्यश्चातिपिङ्गलः ॥

आपीच्यवेषौ कर्तव्यौ तावुभावपि यादव ! ।
तयोर्मूर्ध्नि च विन्यस्तौ करौ कार्यौ विभावसोः ॥

लेखनीपत्रके कार्ये पिङ्गलश्चातिपिङ्गलः ।
चर्मशूलधरो देवस्तथा यत्नाद्विधीयते ॥

सिंहो ध्वजश्च कर्तव्यस्तथा सूर्यस्य वामतः ।
चत्वारश्चास्य कर्तव्यास्तनयास्तस्य पार्श्वयोः ॥

रेवन्तश्च यमश्चैव मनुद्वितयमेव च ।
ग्रहराजो रविः कार्यो ग्रहैर्वा परिवारितः ॥

राज्ञी सवर्णा छाया च तथा देवी सुवर्चसा ।
चतस्रश्चास्य कर्तव्याः पत्न्यश्च परिपार्श्वयोः ॥

एकचक्रे च सप्ताश्वे षडश्वे वा रथोत्तरे ।
उपविष्टस्तु कर्तव्यो देवो ह्यरुणसारथिः ॥

(मत्स्यपुराणे ॥)

---

१. 'पिङ्गलो' इति भवितव्यम् । २. 'उदीच्यवेषौ' इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पद्मासनः पद्मकरः पद्मगर्भदलद्युतिः ।
सप्ताश्वरथसंस्थश्च द्विभुजश्च सदागतिः ॥

(विष्णुधर्मोत्तरे ॥)

एकचक्रससप्ताश्वससारथिमहारथम् ।
कृत्वा तु स्थापयेत्सूर्यं पुरुषाकृतिरूपिणम् ॥

तदर्धं वामतश्श्यामं नारीरूपसमन्वितम् ।
कृत्वा तु स्थापयेत्सम्यक्सर्वाभरणभूषितम् ॥

आकुञ्चितसुकेशास्तु[1] प्रभामण्डलसंयुतम् ।
मकुटं वा विधातव्यमन्यत्सर्वं सुमण्डलम् ॥

हस्तद्वयलसत्पद्मं कञ्चुकाञ्चितविग्रहम् ।
एकवक्त्रं द्विदोर्दण्डं स्कन्धे सक्तकराम्बुजम् ॥

रथोपेतं विना वाथ केवलं पद्मसंस्थितम् ।
पादौ सखेटकौ[2] तस्य स्थिरं पद्मासने स्थितम् ॥

जातिहिङ्गुल्यवर्णस्था (?) संस्थाप्या[3] सूर्यमण्डलम् ।
वैकर्तनो विवस्वांश्च मार्ताण्डो भास्करो रविः ॥

लोकप्रकाशकश्चैव लोकसाक्षी त्रिविक्रमः ।
आदित्यश्च तथा सूर्यः अंशुमांश्च दिवाकरः ॥

---

१. 'सुकेशं त्वि' ति भवितव्यम् । २. 'सकटका' विति भवितव्यम् ।
३. 'संस्थाप्य' मिति भवितव्यम् ।



12

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

एते वै द्वादशादित्या एवमाकृतिरुच्यते ।
द्विभुजाश्च द्विनेत्राश्च पद्मस्थाः पद्महस्तकाः ॥
रक्ताम्बरसुवर्णाश्च प्रभामण्डलमण्डिताः ।
उपवीतसमायुक्तास्सर्वाभरणभूषिताः ॥
आदित्याकृतिरेवं तु चन्द्राकृतिरथोच्यते ।

(पूर्वकारणागमे त्रयोदशपटले ॥)

सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ।
द्विभुजं चैकवक्त्रं च श्वेतपङ्कज़धृक्करम् ॥
वर्तुलं तेजसो बिम्बं, मध्यस्थं रक्तवाससम् ।
आदित्यस्य त्विदं रूपं कुर्यात्पापप्रणाशनम् ॥

(रूपमण्डने ॥)

ससप्ताश्वे सैकचक्रे रथे सूर्यो द्विपद्मधृक् ।
मषीभाजनलेखन्यौ बिभ्रत्कुण्डी[1] तु दक्षिणे ॥
वामे तु पिङ्गलो द्वारि दण्डभृत्स रवेर्गणः ।
वालव्यजनधारिण्यौ पार्श्वे राज्ञी च निष्प्रभा[2] ॥
अथवाश्वसमारूढः कार्य एकस्तु भास्करः ।
..........................................
वरुणस्सूर्यनामा च सहस्रांशुस्तथा परः ॥

---

१. मत्स्यपुराणवचनानुसारेण 'दण्ड' इति वा रूपमण्डनानुरोधेन 'दण्डी' ति वा भवितव्यम् । २. 'निक्षुभे' ति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

धाता तपनसंज्ञश्च सविताथ गभस्तिमान् ।
रविश्चैवाथ पर्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः ॥

मेषादिराशिसंस्थाश्च मार्गादिकार्तिकान्तगाः ।
कृष्णो रक्तो मनाग्रक्तः पीतः पाण्डुरकस्सितः ॥

कपिलः पीतवर्णश्च शुकाभो धवलस्तथा ।
धूम्रो नीलः क्रमाद्वर्णाश्शक्तयः केसराग्रगाः ॥

इडा सुषुम्ना विश्वार्चिरिन्दुसंज्ञा प्रमर्दिनी ।
प्रहर्षणी महाकाली कपिला च प्रबोधनी ॥

नीलाम्बरा घनान्ता च अमृताख्या च शक्तयः ।

(अग्निपु० ५१ अ० ॥)

## आदित्यपरिवाराः ।

श्वेतस्सोमः कुजो रक्तो बुधः पीतो गुरुस्तथा ।
शुक्रश्श्वेतश्शनिः कृष्णो राहुर्धूम्रास्तु केतवः ॥

पद्महस्तो भवेत्सोमः कुजे दण्डः कमण्डलुः ।
योगासनो बुधो देवो गुरौ चाक्षकमण्डलू ॥

अक्षः कमण्डलुश्शुक्रे शनौ दण्डकमण्डलू ।
अर्धकायस्थितो राहुः केतुः करपुटाकृतिः ॥

सप्ताश्वरथ आदित्यश्चन्द्रो दशहयस्थितः ।
मङ्गलो मेषमारूढो बुधस्सर्पासनस्थितः ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

हंसारूढं गुरुं विद्याद्भेकारूढं च भार्गवम् ।
शनिं महिषमारूढं राहुं कुण्डस्य मध्यगम् ॥

सर्पपुच्छाकृतिं केतुं शनिं दंष्ट्राकरालितम् ।
ग्रहाः किरीटिनः कार्या रत्नकुण्डलशोभिताः ॥

सूर्यस्यायतने स्थाप्या वह्निकोणादितः क्रमात् ।
कुजा जीवस्तमश्शुक्रः केतवो ज्ञश्शनिश्शशी ॥

(रूपमण्डने ॥)

तेजश्चण्डो महावक्त्रो द्विभुजः पद्मखड्गभृत् ।
कुण्डिकाजप्यमालीन्दुः कुजश्शक्त्यक्षमालिकः ॥

बुधश्चापाक्षपाणिस्स्याज्जीवः कुण्ड्यक्षमालिकः ।
शुक्रः कुण्ड्यक्षमाली स्यात्किङ्किणीसूत्रवाञ्छनिः ॥

अर्धचन्द्रधरो राहुः केतुः खड्गी च दीपभृत् ।

(अग्निपु० ५१ अ० ॥)

## सोमः ।

सोमस्सिंहासनासीनः कुन्दशङ्खसमद्युतिः ।
प्रभामण्डलसंयुक्तो द्विभुजस्सौम्यवक्त्रकः ॥

आसीनो वा स्थितो वापि कुमुदोज्वलकं करः ।
हेमयज्ञोपवीताङ्गस्सर्वाभरणभूषितः ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

शुक्लवस्त्रधरश्शान्तस्सर्वपुष्पैरलङ्कृतः ।
सोम एवं समाख्यातः क्षेत्रपालस्तथोच्यते ॥

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

चन्द्रश्चित्रे विधातव्यश्श्वेताम्बरसमावृतः ।
दशश्वेताश्वसंयुक्तमारूढं स्यन्दनं शुभम् ॥

द्विभुजं दक्षिणे पाणौ गदां बिभ्रत्पृथूदरीम् ।
वामस्तु वरदो हस्तश्शशाङ्कस्य निरुच्यते ॥

(शिल्परत्ने पञ्चविंशाध्याये ॥)

चन्द्रस्श्वेतवपुः कार्यश्श्वेताम्बरधरः प्रभुः ।
चतुर्बाहुर्महातेजास्सर्वाभरणभूषितः ॥

कुमुदौ च सितौ कार्यौ तस्य देवस्य हस्तयोः ।
कान्तिर्मूर्तिमती कार्या तस्य पार्श्वे तु दक्षिणे ॥

वामे शोभा तथा कार्या रूपेणाप्रतिमा भुवि ।
चिह्नं तथास्य सिंहाङ्कं वामपार्श्वेऽर्कवद्भवेत् ॥

दशाश्वे च रथे कार्यो द्विचक्रे वरसारथौ ।

(मत्स्यपुराणे ॥)

श्वेतश्श्वेताम्बरधरश्श्वेताश्वश्श्वेतभूषणः ।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरदश्शशी ॥

(विष्णुधर्मोत्तरे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

चित्रसिंहासनासीनः कुन्दस्फटिकसन्निभः ।
प्रभामण्डलसंयुक्तो द्विबाहुश्च द्विनेत्रकः ॥

आसीनो वा स्थितो वापि कुमुदप्रज्वलत्करः ।
तस्य दक्षिणभागे तु रोहिणी द्विभुजान्विता ॥

सस्याङ्कुरनिभाङ्गा स्याद्राजीवसमलोचना ।
चन्द्राकृतिस्समाख्याता स्कन्दस्याकृतिरुच्यते ॥

(पूर्वकारणागमे त्रयोदशपटले ॥)

भौमः ।

धरापुत्रस्य वक्ष्यामि लक्षणं चित्रकर्मणि ।
चतुर्भुजो मेषगमश्चाङ्गारकसमद्युतिः ॥
दक्षिणं तद्वरं हस्तं वरदं परिकल्पयेत् ।
ऊर्ध्वं शक्तिसमायुक्तं वामौ शूलगदाधरौ ॥

(शिल्परत्ने पञ्चविंशाध्याये ॥)

भौमोऽग्नितुल्यः कर्तव्यस्त्वष्टाश्वे काञ्चने रथे ।

(मत्स्यपुराणे ॥)

रक्तमाल्याम्बरधरश्शक्तिशूलगदाधरः ।
चतुर्भुजो मेषगमो वरदस्स्याद्धरासुतः ॥

(विष्णुधर्मोत्तरे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

बुधः ।

सिंहारूढं संप्रवक्ष्ये कर्णिकारसमप्रभम् ।
पीतमाल्याम्बरधरं स्वर्णभूषाविभूषितम् ॥
वरदं खड्गसंयुक्तं खेटकेन समन्वितम् ।
गदया च समायुक्तं बिभ्राणं दोश्चतुष्टयम् ॥
एवं लिखेच्चन्द्रसूनुं बुधं ग्रहपतिं शुभम् ।

(शिल्परत्ने पञ्चविंशाध्याये ॥)

विष्णुतुल्यो बुधः कार्यो भौमतुल्ये तथा रथे ।

(विष्णुधर्मोत्तरे ॥)

देवगुरुशुक्रौ ।

ततो देवगुरुर्लेख्यश्शुक्रश्च भृगुनन्दनः ।
चतुर्भिर्बाहुभिर्युक्तश्चित्रकर्मविशारदैः ॥
वरदौ साक्षसूत्रौ च कमण्डलुधरौ तथा ।
दण्डिनौ च तथा बाहौ बिभ्राणौ [परि*]कल्पयेत् ॥

(शिल्परत्ने पञ्चविंशाध्याये ॥)

तप्तजाम्बूनदाकारो द्विभुजश्च बृहस्पतिः ।
पुस्तकं चाक्षमालां च करयोस्तस्य कारयेत् ॥
सर्वाभरणयुक्तश्च तथा पीताम्बरो गुरुः ।
अष्टाश्वे काञ्चने दिव्ये रथे दृष्टिमनोरमे ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

शुक्रश्श्वेतवपुः कार्यश्श्वेताम्बरधरस्तथा ।
द्वौ करौ कथितौ तस्य निधिपुस्तकसंयुतौ ॥

दशाश्वे वा रथे कार्यो राजते भृगुनन्दनः ।

(विष्णुधर्मोत्तरे ॥)

शनैश्वरः ।

शनैश्वरः कृष्णवर्णो द्विभुजस्सितवाससा ।
करण्डमकुटोपेतस्सर्वाभरणभूषणः ॥

दण्डं दक्षिणहस्ते तु वरदं वाममुच्यते ।
स्थानकं पद्मपीठे तु शुक्लवस्त्रधरश्शुचिः ॥

ईषत्पङ्गुरिव स्थाने ईषद्वृद्धतनुस्स्मृतः ।

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

कृष्णवासास्तथा कृष्णश्शनिः कार्योऽसितानतः ।
दण्डाक्षमालासंयुक्तः करद्वितयभूषणः ॥
कार्ष्णायसे रथे कार्यस्तथैवाष्टतुरङ्गमे ।

(विष्णुधर्मोत्तरे ॥)

राहुः ।

सिंहासनगतं राहुं करालवदनं लिखेत् ।
वरदं खड्गसंयुक्तं खेटशूलधरं क्रमात् ॥

(शिल्परत्ने पञ्चविंशाध्याये ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

रौप्ये रथे तथाष्टाश्वे राहुः कार्यो विचक्षणैः ।
कम्बलं पुस्तकं कार्यं भुजेनैकेन संयुतम् ॥
करमेकं तु कुर्याच्च शस्यशून्यं[1] तु दक्षिणम् ।

(विष्णुधर्मोत्तरे ॥)

केतवः ।

धूम्रा द्विबाहवस्सर्वे वरदाश्च गदाधराः ।
गृध्रपृष्ठसमारूढा लेखनीयास्तु केतवः ॥
गृध्राः किरीटिनः कार्या नवतालप्रमाणकाः ।
रक्तकुण्डलकेयूरहाराभरणभूषिताः ॥

(शिल्परत्ने पञ्चविंशाध्याये ॥)

भौमवच्च तथा रूपं केतोः कार्यं विजानता ।
केवलं चास्य कर्तव्या दश राजंस्तुरङ्गमाः ॥

(विश्वकर्मशास्त्रे ॥)

आदित्यप्रतीहाराः ।

तर्जन्यंशुताम्रचूडदण्डैर्दण्डी तु वामतः ।
तर्जनीशक्तिकिरणदण्डैस्स्यात्पिङ्गलः परः ॥
द्वे तर्जन्यौ वज्रदण्डावानन्दो वामगो दधत् ।
तर्जनीदण्डापसव्ये विचित्रो दक्षिणे स्थितः ।

---

१. 'शस्त्रशून्य' मिति ज्ञात ।





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

द्वे तर्जन्यौ पद्मदण्डौ चित्रो धत्ते स वामतः ।
तर्जनीदण्डापसव्ये विचित्रो दक्षिणे स्थितः ॥
तर्जन्यौ किरणं दण्डं किरणाक्षस्तु धारयेत् ।
तर्जनीदण्डापसव्ये प्रतीहारस्सुलोचनः ॥
चतुर्द्वारेषु संस्थाप्या दिशास्वेते प्रदक्षिणम् ।
(रूपमण्डने ॥)

भूयस्तव प्रवक्ष्यामि दण्डनायकपिङ्गलौ ।
राज्ञस्त्रौषादयश्चान्ये दिग्देवा दिण्डिना सह ॥
मया सह समागम्य पुरा देवैर्विचारितम् ।
एष कारुणिकस्सूर्यो युद्ध्यते दानवैस्सह ॥
ते तु लब्धवरा भूत्वा अमात्याद्या ह्यभीक्ष्णशः ।
आदित्यं मन्यमानास्ते तपन्तं हन्तुमुद्यताः ॥
तस्मात्तेषां विघातार्थं प्रवराश्च भवामहे ।
अस्माभिः प्रतिरुद्धास्ते न द्रक्ष्यन्ति दिवाकरम् ॥
संमत्यैवं ततस्स्कन्दो वामपार्श्वे रवेस्स्थितः ।
दण्डनायकसंज्ञस्तु सर्वलोकस्य स प्रभुः ॥
उक्तश्च स तदार्केण त्वं प्रजादण्डनायकः ।
दण्डनीतिकरो यस्मात्तस्मात्त्वं दण्डनायकः ॥
लिखते यः प्रजानां च सुकृतं यच्च दुष्कृतम् ।
अग्निर्दक्षिणपार्श्वे तु पिङ्गलत्वात्स पिङ्गलः ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

अश्विनौ वापि सूर्यस्य पार्श्वयोरुभयोस्स्थितौ ।
अश्वरूपात्समुत्पन्नौ तेन तावश्विनौ सुरौ ॥
द्वारपालौ स्मृतौ तस्य राज्ञः श्रेष्ठौ[१] महाबलौ ।
कार्तिकेयस्स्मृतो राज्ञः श्रेष्ठश्चापि[२] हरस्स्मृतः ॥
राजृदीप्तौ स्मृतो धातुर्नकारस्तस्य प्रत्ययः ।
सुरसेनापतित्वेन स यस्माद्दीप्यते सदा ॥
तस्मात्स कार्तिकेयस्तु नाम्ना राज्ञ इति स्मृतः ।
स्रुगतौ च स्मृतो धातुर्यस्य स प्रत्ययस्स्मृतः ॥
गच्छतीति रह[३]स्तस्मात्पर्यायात्स्रौष उच्यते ।
प्रथमं यद्भवेद्द्वारं धर्माथाभ्यां समाश्रितम् ॥
तत्रैतौ संस्थितौ देवौ लोकपूज्यौ द्विजोत्तमाः ! ।
द्वितीयायां तु कक्ष्यायामप्रधृष्टौ व्यवस्थितौ ॥
पक्षिप्रेताधिपौ नाम्ना स्मृतौ कल्माषपक्षिणौ ।
वर्णस्य शबलत्वाच्च यमः कल्माष उच्यते ॥
पंक्षावस्येति यः पक्षी गरुडः परिकीर्तितः ।
स्थितो दक्षिणतस्तस्य दण्डहस्तसमन्वितः ॥

---

१. उपरितननिर्वचनानुसारेण 'राज्ञस्रौषा'विति भवितव्यम् । २. 'स्रौषश्चापी'ति भषितव्यम् । ३. 'हरस्स्मृत' इति पूर्ववचनानुसारेण 'हर' इति भवितव्यम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

उत्तरेण स्थितोऽर्कस्य कुबेरश्च विनायकः ।
कुबेरो धनदो ज्ञेयो हस्तिरूपो विनायकः ॥

कुत्सया कुप्यता शप्तं कुशरीरमजायत ।
कुबेरः कुशरीरत्वात्स नाम्ना धनदस्स्मृतः ॥

नायकस्सर्वसत्वानां तेन नायक उच्यते ।
विविधं नयते यस्मात्स तु तस्माद्विनायकः ॥

रेवतश्चैव दिण्डिश्च तौ रवेः पूर्वतस्स्थितौ ।
ततो दिण्डिस्स्मृतो रुद्रो रेवतस्तनयो रवेः ॥

प्लुतं गच्छत्यसौ यस्मात्सर्वलोकनमस्कृतः ।
रेवृप्लवगतौ धातूरेवतस्तेन स स्मृतः ॥

डिङ्गतावस्य वै धातोर्दिण्डिशब्दो निपात्यते ।
डयतेऽसौ सदा दिण्डी तेन दिण्डी प्रकीर्तितः ॥

इत्येते प्रवराः प्रोक्ता धात्वर्था नैगमैश्शुभैः ।
एषां संक्षेपतो भूयस्सङ्ख्यां वो निगदामि वै ॥

अश्विनौ तौ ततो ज्ञेयौ दण्डनायकपिङ्गलौ ।
तौ सूर्यद्वारपौ ज्ञेयौ राज्ञस्त्रौषौ ततस्स्मृतौ ॥

रेवतश्चैव दिण्डिश्च इत्येते प्रवरा मया ।
अष्टादश समाख्यातास्संक्षेपात्सङ्ख्यया मया ॥

(भविष्यपुराणे ब्रा० प० १२४ अ० ॥)

---



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# देव्यः ।

## देवी ।

देव्यास्संस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् ।
शिलादिद्रव्यमापाद्य तैः कुर्यात्प्रतिमां ततः ॥

चतुर्भुजा त्रिनेत्रा च सुप्रसन्नैकवक्त्रका ।
दुकूलवसना देवी करण्डमकुटान्विता ॥

वरदाभयसंयुक्ता पाशाङ्कुशकरान्विता ।
द्विभुजा वा द्विनेत्रा वा प्रलम्बितकरान्विता ॥

पद्महस्तातिशान्ता च सा देवी कनकप्रभा ।
शुकोत्पलकरा वापि शूलपाशकरापि वा ॥

यथेष्टास्त्रापि वा शङ्खचक्रहस्ता तु षड्भुजा ।
दंष्ट्राकरालवदना पञ्चास्या दशदोर्युता ॥

देवोक्तास्त्रासना वापि देवालिङ्गनतत्परा ।
देवोरुसंस्थिता वापि स्थानकासनसंयुता ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

प्रलम्बवामपादा वा लम्बितापरपादका ।
देवेन सहिता वापि केवला वा प्रकीर्तिता ॥

श्यामा श्वेताथवा रक्ता साधकेच्छानुरूपतः ।
ऋज्वाकारयुता वापि द्विभङ्गिसहिताथवा ॥

एवं देवी प्रकर्तव्या तस्यास्संज्ञा द्विधा मता ।
मनोन्मनीति गौरीति लक्ष्यभेदं नु नानयोः ॥

मूर्तिस्सादाशिवी यत्र कल्प्यते तत्र कल्पिता ।
तदा मनोन्मनीसंज्ञां लभते विप्रसत्तमाः ! ॥

नृत्तमूर्त्यादिभेदेषु गौर्याद्याख्यां समश्नुते ।

(उत्तरकामिकागमे चतुश्चत्वारिंशत्तमपटले ॥)

द्विभुजां श्यामवर्णां तु सर्वाभरणभूषिताम् ।
दक्षिणे चोत्पलं ग्राह्यं वामहस्तं प्रसारयेत् ॥

किरीटं वा करण्डाख्यं तुङ्गपीनपयोधराम् ।
गौरीरूपमिदं विद्धि विष्णुरूपं ततश्शृणु ॥

(सुप्रभेदागमे चतुस्त्रिंशत्तमपटले ॥)

द्विभुजा च द्विनेत्रा च किंचित्प्रहसितानना ।
करण्डमकुटोपेता सर्वाभरणभूषिता ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

दुकूलवसनोपेता सर्वावयवसुन्दरी ।
दक्षिणे कटकं हस्तं वामहस्तं प्रलम्बितम् ॥
पीनोरुः पीनगण्डा च पीनस्तनसमन्विता ।
द्विबाहुका द्विनेत्रा च श्यामाभा कमलेक्षणा ॥
दक्षिणे चोत्पलं हस्ते वामहस्तं प्रलम्बितम् ।
भवान्याकृतिरेवं स्याद्वागीश्याकृतिरुच्यते ॥

(पूर्वकारणागमे द्वादशपटले ॥)

दुर्गा ।

चतुर्भुजा त्रिनेत्रा च सा स्याच्छ्यामनिभा वरा ।
सौम्या पीताम्बरोपेता पीनोरुजघनस्तना ॥
करण्डमकुटोपेता सर्वाभरणभूषिता ।
अभयं दक्षिणं हस्तं कटकं वामहस्तकम् ॥
परहस्ते तु सव्ये तु चक्रं वामे तु शङ्खधृक् ।
समपादस्थिता चैव पद्मपीठोपरिस्थिता ॥
नागेन्द्रेण स्तनं बध्वा रक्तकञ्चुकधारिणी ।
एवं दुर्गा समाख्याता विष्णुलक्षणमुच्यते ॥

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

आदिशक्तेस्समुद्भूता विष्णुप्राणानुजा शुभा ।
शङ्खचक्रधरा देवी धनुस्सायकधारिणी ॥



14

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

खड्गखेटकसंयुक्ता शूलपाशसमायुता ।
चतुर्भुजां वा कुर्वीत सर्वाभरणभूषिताम् ॥

श्यामवर्णां सुवदनां महिषस्य शिरस्स्थिताम् ।
सिंहारूढां च वा कुर्यात्पद्मासनसमागताम् ॥

(सुप्रभेदागमे षट्चत्वारिंशत्तमपटले ॥)

शक्तिं बाणं तथा शूलं खड्गं चक्रं च दक्षिणे ।
चन्द्रबिम्बमधो वामे खेटमूर्ध्वे कपालकम् ॥
शूलं चक्रं च बिभ्राणा सिंहारूढा च दिग्भुजा ।
एषा देवी समुद्दिष्टा दुर्गा दुर्गापहारिणी ॥

(विष्णुधर्मोत्तरे ॥)

ललाटलोचनं तस्यास्तिलकं च शिखामणिः ।
शशिखण्डकिरीटं वा मकुटं सकरण्डकम् ॥

सनक्रकुण्डलं रत्नमण्डनं कर्णमण्डनम् ।
कर्णावतंसकाकर्णचूलिकापालिकान्वितम् ॥

चतुर्भुजसमायुक्तामष्टाभिर्दोर्भिरन्विताम् ।
शूलं खड्गं शरं चक्रं दक्षिणेषु करेषु च ॥

पाशखेटकशार्ङ्गाश्च शङ्खं वामकरेषु च ।
चतुर्भुजे च वामे तु शङ्खं वरदहस्तकम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

चक्रं चाभयहस्तं च दक्षिणे तु समायुता ।
द्विनेत्रा सौम्यवदना महिषस्य शिरस्स्थिता ॥
दुर्गायास्त्वाकृतिर्ह्येवं ब्रह्माण्याकृतिरुच्यते ।

(पूर्वकारणागमे द्वादशपटले ॥)

## दुर्गामूर्तित्रयम् ।

वरं त्रिशूलं खेटं च पानपात्रं च बिभ्रती ।
नीलकण्ठे तथा नागा[1] महालक्ष्मीसुखप्रदा ॥
वरं त्रिशूलं पद्मं च पानपात्रं करे तथा ।
क्षेमङ्करी तदा नाम क्षेमारोग्यप्रदायिनी ॥
कमण्डलुं च खड्गं च डमरुं पानपात्रकम् ।
हरसिद्धिस्तदा नाम सर्वेषां सिद्धिहेतवे ॥

(रूपमण्डने ॥)

## रुद्रांशदुर्गा ।

रक्ताम्बरां श्यामलिनीं द्विनेत्रां किरीटरत्नाङ्कितहेमभूषाम् ।
सशूलखड्गां धृतशङ्खचक्रां मृगेन्द्रयानां रविचन्द्रभूषाम् ॥

(कारणागमे ॥)

---

१. 'नीलकण्ठी तदा नामे'ति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

### वनदुर्गा ।

अरिशङ्खकृपाणखेटबाणान्सधनुश्शूलकतर्जनीं दधाना ।
मम सा महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥

(आम्नाये ॥)

### अग्निदुर्गा ।

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ॥
हस्तैश्चक्रवरासिखेटविशिखांश्चापाङ्कुशौ तर्जनीं ।
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥

### जयदुर्गा ।

कालां स्फारां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां
शङ्खं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम् ।
सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं
ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥

### विन्ध्यवासिनी दुर्गा ।

सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसन्निभां
शङ्खं चक्रवराभयानि दधतीमिन्दोः कलां बिभ्रतीम् ।
ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैस्स्तुतां
ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## रिपुमारिणी दुर्गा ।

तर्जनीं त्रिशिखं दोर्भ्यां धारयन्तीं भयङ्करीम् ।
रक्तां ध्यात्वा रवेर्बिम्बे प्रजपेदयुतं मनुम् ॥
मारयेदचिरादेव रिपून्बन्धुसमन्वितान् ।

(शारदातिलके ।।)

## कात्यायनी ।

वक्ष्ये कात्यायनीं देवीं शिवनारायणान्विताम् ।
बाहुभिर्दशभिर्युक्तां जटामकुटमण्डिताम् ॥
लोचनत्रयसंयुक्तामर्धेन्दुकृतशेखराम् ।
अतसीपुष्पसंकाशामिन्दीवरदलेक्षणाम् ॥
पीनोन्नतकुचाम्भोजां तनुमध्येन शोभिताम् ।
त्रिभङ्गिस्थानसंस्थानां महिषासुरमर्दनीम् ॥
त्रिशूलं दक्षिणे खड्गं शक्तिं चक्रधरं (?) तथा ।
अधिज्यं कार्मुकं वामे पाशमङ्कुशखेटकम् ॥
घण्टां च परशुं चापि धारयन्तीं समालिखेत् ।
अधस्तान्महिषं चास्याश्छिन्नग्रीवं समालिखेत् ॥
छिन्नस्थाने समुत्पन्नं खड्गखेटकधारिणम् ।
हृदि शूलेन निर्भिन्नं रुधिरारुणविग्रहम् ॥




पुस्तकालय

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

प्रबद्धं नागपाशेन भ्रुकुटीभीषणेक्षणम् ।
नाभेरूर्ध्वं विनिष्क्रान्तं दानवं दारुणं लिखेत् ॥

दक्षिणं चरणं देव्यास्सिंहपृष्ठे प्रतिष्ठितम् ।
उत्तुङ्गमञ्चितं वामं महिषस्योपरिस्थितम् ॥

(शिल्परत्नसंयोजिते कस्मिंश्चिद्ग्रन्थे ॥)

कात्यायन्याः प्रवक्ष्यामि रूपं दशभुजं तथा ।
त्रयाणामपि देवानामनुकारानुकारिणीम् ॥

जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम् ।
लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥

अतसीपुष्पसङ्काशां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसंपन्नां सर्वाभरणभूषिताम् ॥

सुचारुदशनां तद्वत्पीनोन्नतपयोधराम् ।
त्रिभङ्गिस्थानसंस्थानां महिषासुरमर्दनीम् ॥

त्रिशूलं दक्षिणे दध्यात्खड्गं चक्रं तथैव च ।
तीक्ष्णबाणं तथा शक्तिं वामतो विनिबोधत ॥

खेटकं पूर्णपात्रं च पाशमङ्कुशमेव च ।
घण्टां च परशुं चापि चामरं सन्निवेशयेत् ॥

अधस्तान्महिषं विद्याद्विशिरस्कं प्रदर्शयेत् ।
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिकम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषणम् ।
रक्तरक्तीकृताङ्गं च रक्तविस्तारितेक्षणम् ।।

वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् ।
सपाशवामहस्तेन धृतकेशं च दुर्गया ।।

वमद्रुधिरवक्त्रं च देव्यास्सिंहं प्रदर्शयेत् ।

(मयदीपिकायाम् ।।)

कात्यायनीं ततो वक्ष्ये दशहस्तां महाभुजाम् ।
तेजःप्रतापदा नित्यं नृपाणां सुखबोधिनी ।।

त्रिभङ्गिस्थानसंस्थाना महिषासुरसूदनी ।
दक्षे त्रिशूलं खड्गं च चक्रं बाणं च शक्तिकाम् ।।

खेटकं पूर्णचापं च पाशमङ्कुशमेव च ।
घण्टा च वामतो वृध्यदत्यमूर्धजधृत्करी[1] ।।

अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ।
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम्[2] ।।

हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ।
रक्तरक्तीकृताङ्गं च रक्तविष्फारितेक्षणम् ।।

---

१. 'दध्याद्दैत्यमूर्धजधृक्करी' ति स्यात् । २. 'पाणिक' मि स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् ।
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥

(रूपमण्डने ॥)

चण्डिका ।

निगद्यते ह्यथो चण्डी हेमाभा सा सुरूपिणी ।
त्रिनेत्रा यौवनस्था च क्रुद्धा चोर्ध्वस्थिता मता ॥

कृशमध्या विशालाक्षी चारुपीनपयोधरा ।
एकवक्त्रा तु सुग्रीवा बाहुर्विंशतिसंयुता ॥

शूलासिशङ्खचक्राणि बाणशक्तिपवीनपि ।
अभयं डमरुं चैव छत्रिकां दक्षिणे करे ॥

ऊर्ध्वादिक्रमयोगेन बिभ्रती सा सदा शुभा ।
नागं पाशं तथा खेटं कुठाराङ्कुशकार्मुकम् ॥

घण्टाध्वजगदादर्शं मुद्गरं वाम एव च ।
तदधो महिषश्छिन्नमूर्धा पतितमस्तकः ॥

शस्त्रोद्यतकरस्तत्र्धस्तद्ग्रीवासंभवः पुमान् ।
शूलभिन्नो वमद्रक्तो रक्तभ्रूमूर्धजेक्षणः ॥

सिंहेन खाद्यमानश्च पाशबद्धो गले भृशम् ।
याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्र्यालीढगासुरे ॥

चण्डी चोद्यतशस्त्रेयं चाशेषरिपुनाशिनी ।

(विष्णुधर्मोत्तरे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

चण्डिका श्वेतवर्णा सा शिवरूपा च सिंहगा[1] ।
जटिला वर्तुलत्र्यक्षा वरदा शूलधारिणी ॥

कर्त्रिकां बिभ्रती दक्षे पाशपात्राभयान्विता[2] ।

(नृसिंहप्रासादे ॥)

गोधासनाद्भवेद्गौरी लीलया (?) हंसवाहना ।
सिंहारूढा भवेद्दुर्गा मातरस्स्वस्ववाहनाः ॥

चण्डिका क्रूररूपा च पिङ्गकेशा कृशोदरी ।
रक्ताक्षी भग्ननेत्रा च निर्मांसा विकृतानना ॥

व्याघ्रचर्मपरीधाना भुजङ्गाभरणान्विता ।
कपालमालिनी कृष्णा शवारूढा भयावहा ॥

त्रिशूलं खेटकं खड्गं धनुः पाशाङ्कुशे शरः ।
कुगरो[3] दर्पणं घण्टा शङ्खश्चक्रं गदा पविः ॥

दण्डो मुद्गह[4] इत्येतैर्यथास्थानायुधैर्युता ।
बाहुषोडशसंयुक्ता चण्डमुण्डविघातिनी ॥

---

१. 'स्याच्छवारूढा च षड्भुजे' ति विष्णुधर्मोत्तरपाठः । २. 'वर्णिकां बिभ्रती दक्षे पानपात्राभयान्यतः' इति विष्णुधर्मोत्तरपाठः । ३. कुठार इति स्यात् । ४. मुद्गर इति स्यात् ।





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## चण्डिकाप्रतीहाराः ।

चण्डिकायाः प्रतीहारान्कथयिष्याम्यनुक्रमात् ।
वेतालः करटश्चैव पिङ्गाक्षो भ्रुकुटिस्तथा ॥

धूम्रकः कङ्कदश्चैव रक्ताक्षश्च सुलोचनः ।
दंष्ट्राननविकटास्यास्सस्फुरद्दशनोद्वलाः ॥

बर्बरा कृष्णदेहाश्च रक्ताश्च सु महाबलाः ।
तर्जनी चैव खट्वाङ्गमूर्ध्वं डमरुदण्डकौ ॥

वेतालस्तु समाख्यातोऽपसव्ये करटः पुनः ।
अभयं खड्गखेटं च दण्डं पिङ्गललोचनः ॥

वामापसव्ययोगेन भवेद्भ्रुकुटिनामकः ।
तर्जनी वज्राङ्कुशे च दण्डं धूम्रक ईरितः ॥

सव्यापसव्ययोगेदं भवेत्कङ्कदनामकः ।
तर्जनी च त्रिशूलं च खट्वाङ्गं दण्ड एव च ॥

रक्ताक्षो नामभेदेन वामे दक्षे त्रिलोचनः(?) ।
दिग्द्वारपक्षयुग्मे च प्रशस्ता विघ्ननाशकाः ॥

(रूपमण्डने ॥)

## नव दुर्गाः ।

नवपद्मान्विते स्थाने पूज्या दुर्गास्स्वमूर्तितः ।
आदौ मध्ये तथेन्द्रादौ नवतत्वाक्षरैः क्रमात ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

अष्टादशभुजैका तु पीनवक्षोरुहोरुहा[1] ।
सर्वालङ्कारसंयुक्ता सर्वसिद्धिप्रदायिनी ॥
मूर्धजं खेटकं घण्टामादर्शं तर्जनीं धनुः ।
ध्वजं डमरुकं पाशं बिभ्रती वामपाणिभिः ॥
शक्तिमुद्गरशूलानि वज्रं शङ्खमथाङ्कुशम्[2] ।
शलाकां मार्गणं चक्रं दधाना दक्षिणैः करैः ॥
जयमिच्छद्भिरित्येताः पूजनीया महात्मभिः ।
शेषाष्टषोडशहस्ताश्च शलाकां मार्गणं विना[3] ।
रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ।
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥
नवमी चोग्रचण्डा च मध्यस्था वह्निसन्निभा ।
रोचनाभारुणा कृष्णा नीला शुक्ला च धूम्रिका ॥
पीता च पाण्डुरा ज्ञेया आलीढस्था हरिस्थिता[4] ।
महिषस्था सशस्त्रीका दैत्यमूर्धजमुष्टिका ॥
पद्माकृतिरथस्थाप्या इत्युक्तं स्कन्दयामले ।

(भविष्यत्पुराणे ॥)

---

१. 'वक्षोभुजोरुके'ति कारणागमपाठः । २. 'शङ्खमथाम्बुज' मिति कारणागमपाठः । ३. 'शरं डमरुकं विने'ति कारणागमपाठः । ४. 'हरिद्रुता' इति कारणागमपाठः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

नन्दा ।

नन्दा भगवती देवी भारद्वाजाभिनन्दजा ।
वरपाशाङ्कुशाब्जानि बिभ्रती च चतुर्भुजा ॥

गौरवर्णा गजस्था वा खड्गखेटवराभया ।

भद्रकाली ।

अष्टादशभुजा कार्या भद्रकाली मनोहरा ।
आलीढस्वासनस्था[1] च चतुस्सिंहे रथे स्थिता ॥

अक्षमाला त्रिशूलं च खड्गश्चन्द्रश्च यादव[2] ! ।
बाणचापे च कर्तव्ये शङ्खपद्मे तथैव च ॥

स्रुक्स्रुवौ च तथा कार्यौ तथोदककमण्डलू[3] ।
दण्डशक्ती च कर्तव्ये कृष्णाजिनहुताशनौ ॥

हस्तानां भद्रकाल्यास्तु भवेच्छान्तिकरः करः[4] ।
एकश्चैव महाभाग ! रत्नपात्रधरो भवेत् ॥

(विष्णुधर्मोत्तरे ॥)

---

१. 'आलीढस्थानसंस्थाने'ति नृसिंहप्रासादपाठः । २. 'खड्गं चर्म च सर्वदे' ति नृसिंहप्रासादपाठः । ३. तथा दिव्यकमण्डलु ' रिति नृसिंहप्रासाद-पाठः । ४. 'भवेच्छान्तिकरोऽवर ' इति नृसिंहप्रासादपाठः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## महाकाली ।

खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः
शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ॥

(चण्डीकल्पे ॥)

अष्टबाहुर्महाकाया कालमेघसमप्रभा ।
शङ्खचक्रगदाकुम्भमुसलाङ्कुशपाशयुक् ॥
वज्रं करे बिभ्रती सा महाकाली मुदेऽस्तु नः ।

(कारणागमे ॥)

सा भिन्नाञ्जनसङ्काशा दंष्ट्राङ्कितवरानना ।
विशाललोचना नारी बभूव तनुमध्यमा ॥
खड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा ।
कबन्धहारं शिरसा बिभ्राणा हि शिरस्स्रजम् ॥

## अम्बा ।

अम्बा कुमुदवर्णाभा पाशाब्जाभीतिपात्रिणी ।

(विष्णुधर्मोत्तरे ॥)

## अम्बिका ।

सिंहारूढाम्बिका त्र्यक्षा भूषिता दर्पणोद्वहा ।
(वामभुजे दर्पणोद्वहा दक्षिणे वरयुक्ता, यदुक्तम्—



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

दक्षिणे तु करे प्रोक्तो वरस्साधारणस्सदा ।)

खड्गखेटधरा द्वाभ्यां कर्तव्या च चतुर्भुजा ॥

(लक्षणसमुच्चये ॥)

मङ्गला ।

सिंहासनस्थिता देवी जटामकुटमण्डिता ।

शूलाक्षसूत्रधरा च वरदाभयचापधृक् ॥

दर्पणं शरखेटं च खड्गचन्द्रधरा शिवा ।

सुरूपा लक्षणोपेता सुस्तनी चारुहासिनी ॥

सर्वाभरणभूषाङ्गी सर्वशोभासमन्विता ।

(देवीपुराणे ॥)

सर्वमङ्गला ।

चतुर्बाहुः प्रकर्तव्या सिंहस्था सर्वमङ्गला ।

अक्षसूत्रं कजं दक्षे शूलकुण्डीधरोत्तरे ॥

(विष्णुधर्मोत्तरे ॥)

हेमाभां करुणाभिपूर्णनयनां माणिक्यभूषोज्ज्वलां

द्वात्रिंशद्दलषोडशाष्टदलयुक्पद्मस्थितां सुस्मिताम् ।

भक्तानां धनदां वरं च दधतीं वामेन हस्तेन त-

द्दक्षेणाभयमातुलङ्गसुफलं श्रीमङ्गलां भावये ॥

(शरभतन्त्रे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## कालरात्रिः ।

एकवेणी[1] जपाकर्णपूरा नग्ना खरस्थिता ।
लम्बोष्ठी[2] कर्णिकाकर्णी तैलाभ्यक्तशरीरिणी ॥

वामपादोल्लसल्लोहलताकण्टकभूषणा[3] ।
वर्धम्मूर्धध्वजा कृष्णा[4] कालरात्रिर्भयङ्करी ॥

## ललिता ।

शङ्खमुग्धकरादर्शं बिभ्रती वामपार्श्वतः ।
याम्ये फलाञ्जनीहस्ता ललितोर्ध्वा सुभूषणा ॥

## गौरी ।

गौरी कुमारिकारूपा ध्यायमाना महेश्वरैः ।
वरदाभयहस्ता सा द्विभुजा श्रेयसे सदा ॥

अक्षसूत्राभये पद्मं तस्याधश्च कमण्डलुः ।
गौर्या मूर्तिश्चतुर्बाहुः कर्तव्या कमलासना ॥

(विष्णुधर्मोत्तरे ॥)

---

१. 'एकवेणी'ति विष्णुधर्मोत्तरपाठः । २. 'लम्बोष्ठी'ति विष्णुधर्मोत्तरपाठः । ३. 'वामपादोल्लसल्लोहकृतकण्टकभूषणे'ति विष्णुधर्मोत्तरपाठः । ४. 'वर्धयन्मूर्धजा कृष्णे'ति विष्णुधर्मोत्तरपाठः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## गौर्या मूर्तयः ।

अथ गौर्याः प्रवक्ष्यामि प्रमाणं मूर्तिनिर्णयम् ।
चतुर्भुजा त्रिनेत्रा च सर्वाभरणभूषिता ॥

अक्षसूत्राम्बुजे धत्ते दर्पणं च कमण्डलुम् ।
उमानाम्नी भवेन्मूर्तिर्वन्दिता त्रिदशैरपि ॥

अक्षसूत्रं शिवं देवं गणाध्यक्षं कमण्डलुम् ।
पक्षद्वयेऽग्निकुण्डे च मूर्तिस्सा पार्वती स्मृता ॥

अक्षसूत्रं तथा पद्ममभयं च वरं तथा ।
गोधासनाश्रिता मूर्तिर्गृहे पूज्या श्रिये सदा ॥

कमण्डल्वक्षसूत्रं च बिभ्राणा वज्रमङ्कुशम् ।
गजासनस्थिता रम्भा कर्तव्या सर्वकामदा ॥

शूलाक्षसूत्रदण्डांश्च बिभ्राणा श्वेतचामरम् ।
तोतला कथिता चेयं सर्वपापप्रणाशिनी ॥

नागपाशाङ्कुशौ चैवाभयदं वरदं करम् ।
त्रिपुरा नाम संपूज्या वन्दिता त्रिदशैरपि ॥

(रूपमण्डने ॥)

## गौर्यायतनम् ।

वामे सिद्धिः श्रिया (?) याम्ये सावित्री चैव पश्चिमे ।
पृष्टकर्णद्वये कार्या भगवती सरस्वती ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ईशाने तु गणेशस्स्यात्कुमारश्चाग्निकोणके ।
मध्ये गौरी प्रतिष्ठाप्या सर्वाभरणभूषिता ॥

## गौर्या अष्टौ द्वारपालिकाः ।

अभयाङ्कुशपाशदण्डैर्जया चैव तु पूर्वतः ।
सव्यापसव्ययोगेन विजया नाम सा भवेत् ॥

अभयाम्बुजपाशदण्डैरजिता चापराजिता ।
अभयवज्राङ्कुशदण्डैर्विभक्ता मङ्गलापि च ॥

अभयशङ्खपद्मदण्डैर्मोहिनी स्तम्भिनी तथा ।
जया च विजया चैव अजिता चापराजिता ॥

विभक्ता मङ्गला चैव मोहिनी स्तम्भिनी तथा ।
गौर्या आयतने सृष्टा अष्टौ स्युर्द्वारपालिकाः ॥

(रूपमण्डने ॥)

## भूतमाता ।

श्यामवर्णा विशालाक्षी क्षीरारुणनिभानना ।
द्विभुजा बिभ्रती लिङ्गं चर्म शस्त्रं तु दक्षिणे ॥

सिंहासनोपविष्टेयं मुक्ताभरणमूर्धजा ।
भूतप्रेतपिशाचाद्यैस्सेविता तु विशेषतः ॥



16

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

इन्द्रयक्षैश्च गन्धर्वैस्सिद्धविद्याधरादिभिः ।
अश्वत्थस्याप्यधो देवी भूतमातेति विश्रुता ॥

## योगनिद्रा ।

निद्रा तु शयनारूढा सुसौम्या मुकुलेक्षणा[1] ।
पानपात्रधरा[2] चेयं द्विभुजा परिकीर्तिता ॥

(विष्णुधर्मोत्तरे ॥)

## वामा ।

वृत्तस्था जटिला त्र्यक्षा वह्निज्वालासमप्रभा ।
कपालाभयहस्तोग्रा वामावामफलप्रदा ॥
द्विबाहुरेकवक्त्रैषा विधातव्या विपश्चिता ।

## ज्येष्ठा ।

पाटलाभा भवेदष्टाकपालशरधारिणी ।
उग्रा महाबला भूत्यै शत्रुघ्नी शेषपूर्वजा ॥

## रौद्री ।

रक्तवस्त्रा तथा रौद्री कपालचमरीकरा ।
शेषपूर्वा तु विज्ञेया कृष्णवक्त्रा सुभीषणा ॥

---

१. 'कमलेक्षणे' ति पाद्मसंहितापाठः । २. 'पाशपात्रधरे' ति पाद्मसंहितापाठः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## काली ।

घनश्यामा ततः काली ताम्ररक्तनिभानना ।
कपालकर्णिकाहस्ता विज्ञेया भयनाशिनी ॥

## कलविकर्णिका ।

नीलशुभ्रा महादेवी विकर्णी कलपूर्विका ।
कपालशक्तिहस्तेयं भयहृच्च शुभप्रदा ॥

## बलविकर्णिका ।

बभ्रुवर्णा विशालाक्षी कपालं जपमालिकाम् ।
बिभ्राणा शान्तिदा भूत्यै बलपूर्वा विकर्णिका ॥

## बलप्रमथनी ।

ताम्राभा श्वेतवर्णा स्याद्बलप्रमथनी शुभा ।
कपालपाशिनी चेयं सर्वशत्रुक्षयङ्करी ॥

## सर्वभूतदमनी ।

जपाकुसुमवर्णाभा दंष्ट्रिणी च महोदरी ।
कपालवज्रिणी भूतदमनी सर्वपूर्विका ॥

(भविष्यत्पुराणे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## मनोन्मनी ।

नीलताम्रारुणा भासा पृथुवक्त्रा मनोन्मनी ।
कपालखड्गिनी भूत्यै शत्रूणां भयवर्धनी ॥
(विश्वकर्मशास्त्रे ॥)

## वारुणी चामुण्डा ।

लम्बोदरी तु कर्तव्या रक्ताम्बरपयोधरा ।
शूलहस्ता महाभागा भुजप्रहरणा तथा ॥
कार्पासकलत्रा(?) देवी वारुणी चातिसुन्दरी ।
बृहन्नखा च कर्तव्या बहुबाहुस्तथैव च ॥
चामुण्डा कथिता चैव सर्वसत्ववशङ्करी ।
(विष्णुधर्मोत्तरे ॥)

## रक्तचामुण्डा ।

खड्गं पात्रं च मुसलं लाङ्गलं च बिभर्ति सा ।
आख्याता रक्तचामुण्डा देवी योगीश्वरीति च ॥
अनया व्याप्तमखिलं जगत्स्थावरजङ्गमम् ।
इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् ॥
अधीते य इमा नित्यं रक्तदन्त्यावपुस्तकम् (?) ।
तं सा परिचरेद्देवी पतिं प्रियमिवाङ्गना ॥
(रूपमण्डने ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## शिवदूती ।

तथैवार्तमुखी शुष्का शुष्ककाया विशेषतः ।
बहुबाहुयुता देवी भुजगैः परिवेष्टिता ॥

कपालमालिनी भीमा तथा खट्वाङ्गधारिणी ।
शिवदूती तु कर्तव्या शृगालवदना शुभा ॥

आलीढासनसंस्थाना तथा राजंश्चतुर्भुजा ।
असृक्पात्रधरा देवी खड्गशूलधरा तथा ॥

चतुर्थस्तु करस्तस्यास्तथा कार्यस्तु सामिषः ।

(मत्स्यपुराणे ॥)

वामाधो रत्नपात्रं तदुपरि च गदां खेटपाशौ दधानां
दक्षैः पद्मं कुठारं तदुपरि च महाखड्गमप्यङ्कुशं च ।
मध्याह्नार्कप्रभाभां नवमणिविलसद्भूषणामष्टहस्तां
दूतीं नित्यां त्रिनेत्रां सुरगणमुनिभिस्स्तूयमानां भजेऽहम् ॥

(श्रीतत्वनिधौ ॥)

## योगेश्वरी ।

दशबाहुस्त्रिनेत्रा च शस्त्रशक्त्यसिडामरुम् ।
बिभ्रती दक्षिणे हस्ते वामे घण्टां च खेटकम् ॥

खट्वाङ्गं च त्रिशूलं च देवी योगेश्वरी मता ।

(लक्षणसमुच्चये ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## भैरवी ।

एवंरूपा भवेदन्या पाशाङ्कुशयुतारुणा ।
भैरव्याख्या यदीष्टा तु भुजैर्द्वादशभिर्युता ॥

(विश्वकर्मशास्त्रे ॥)

## त्रिपुरभैरवी ।

उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिनीं
रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम् ।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं
देवीं बद्धहिमांशुरत्नमकुटां वन्देऽरविन्दस्थिताम् ॥

(शारदातिलके ॥)

## शिवा ।

शिवा वृषासना कार्या त्रिनेत्रा वरपाणिका ।
डमरूरगधारी च त्रिशूलाभयदायिका ॥

## कीर्तिः ।

सुमध्यां कारयेत्कीर्तिं नीलोत्पलव्यवस्थिताम् ।
सर्वाभरणभूषाङ्गीं कलशोत्पलधारिणीम् ॥

मदिरौदनगन्धाढ्या महार्घमणिभूषणाम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

सिद्धिः ।

सिद्धिर्देवी प्रकर्तव्या सिद्धार्थकवरप्रदा ।
सितचन्दनगन्धाढ्या सितपङ्कजभूषिता ॥

सितासनस्थिता देवी प्रतिहारोपशोभिता ।

ऋद्धिः ।

सुन्दरीं कारयेदृद्धिं पर्यङ्कासनसंस्थिताम् ।
दर्पणालोकसुरतां तिलकालकभूषिताम् ॥

मालाचामरशोभाढ्यां वेणुवीणासदाप्रियाम् ॥

क्षमा ।

क्षमा तु सुमुखी कार्या योगपट्टोत्तरीयका ।
पद्मासनकृताधारा वरदोद्यतपाणिका ॥

शूलमेखलसंयुक्ता प्रशान्ता योगसंस्थिता ।

दीप्तिः ।

तेजोऽधिका प्रकर्तव्या दीप्तिश्चन्द्रासनस्थिता ।

रतिः ।

कमनीया रतिः कार्या वसन्तोज्वलभूषणा ।
नृत्यमाना शुभा देवी समस्ताभरणैर्युता ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

वीणावादनशीला च मदकर्पूरचर्चिता ।
दण्डाक्षसूत्रधरा च व्रतस्था योगसंस्थिता ॥

श्वेता ।

श्वेता पूर्णेन्दुसदृशा श्वेतपङ्कजसंस्थिता ।

भद्रा ।

भद्रा सुभद्रा कर्तव्या भद्रासनव्यवस्थिता ।
नीलोत्पलफलहस्ता शूलसूत्राक्षधारिणी ॥

जयाविजये ।

जयां च विजयां कुर्याच्छूलपद्माक्षधारिणीम् ।
वरोद्यतां च सिंहस्थां सर्वकर्मप्रसाधनीम् ॥

काली ।

काली करालरूपा च चण्डपाशोद्यता भवेत् ।

घण्टाकर्णी ।

घण्टाकर्णी प्रकर्तव्या घण्टात्रिशूलधारिणी ।

जयन्ती ।

जयन्ती सुन्दरी कार्या कुन्तशूलासिधारिणी ।
खेटकव्यग्रहस्ता च पूजनीया शुभान्वितैः ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## दितिः ।

दितिर्दैत्यनुता देवी सदा पूज्या महामुने ! ।
दण्डासनस्थिता भद्रा सर्वाभरणभूषिता ॥
फलनीलोत्पलकरा चोत्सङ्गशिशुभूषिता ।

## अरुन्धती ।

अक्रोधारुन्धती देवी सितवस्त्रा व्रतस्थिता ।
पत्रपुष्पोदककरा चन्दनेन सुचर्चिता ॥

## अपराजिता ।

अपराजिता च कर्तव्या सिंहारूढा महाबला ।
पिनाकेषुकरा चैव खड्गखेटकधारिणी ॥
त्रिनेत्रेन्दुजटाभारा कृतवासुकिकङ्कणा ।

(देवीपुराणे ॥)

नीलोत्पलनिभां देवीं निद्रामुद्रितलोचनाम् ।
नीलकुञ्चितकेशाग्रां निम्ननाभीवलित्रयाम् ॥
वराभयकराम्भोजां प्रणतार्तिविनाशिनीम् ।
पीताम्बरवरोतां भूषणस्रग्विभूषिताम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

वरशक्त्याकृतिं सौम्यां परसैन्यप्रभञ्जनीम् ।
शङ्खचक्रगदाभीतिरम्यहस्तां त्रिलोचनाम् ॥
सर्वकामप्रदां देवीं ध्यायेत्तामपराजिताम् ।

(नारदसंहितायाम् ॥)

सुरभिः ।

सुरभिर्गोमुखी देवी सुरूपा सर्वभूषणा ।
घासमुष्टिं तथा कुण्डीं बिभ्राणा भूतिपुष्टिदा ॥

(विष्णुधर्मोत्तरे ॥)

कृष्णा ।

अक्षसूत्रं च कुण्डीं च हृदयाग्रे पुटाञ्जलिम् ।
पञ्चाग्निकुण्डमध्यस्थां कृष्णां तामनुधारयेत् ॥

(मार्कण्डेयपुराणे ॥)

इन्द्राक्षी ।

इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रद्वयान्विताम् ।
वामहस्ते वज्रधरां दक्षिणेन वरप्रदाम् ॥
इन्द्राक्षीं सहयुवतीं नानालङ्कारभूषिताम् ।
प्रसन्नवदनाम्भोजामप्सरोगणसेविताम् ।

(इन्द्राक्षीकल्पे ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## अन्नपूर्णा ।

वामे माणिक्यपात्रं मधुरसभरितं बिभ्रतीं पाणिपद्मे
दिव्यैरन्नैः प्रपूर्णां धृतमणिवलये दक्षिणे रत्नदर्वीम् ।
रक्ताङ्गीं पीनतुङ्गस्तनभरविलसत्तारहारां त्रिनेत्रां
वन्दे पूर्णेन्दुबिम्बप्रतिनिधिवदनामम्बिकामन्नपूर्णाम् ॥

सिन्दूराभां त्रिनेत्राममृतशशिकलां खेचरीं रक्तवस्त्रां
पीनोत्तुङ्गस्तनाढ्यामभिनवविलसद्यौवनारम्भरम्याम् ।
नानालङ्कारयुक्तां सरसिजनयनामिन्दुसंक्रान्तमूर्तिं
देवीं पाशाङ्कुशाढ्यामभयवरकरामन्नपूर्णां नमामि ॥

(कारणागमे ॥)

## तुलसीदेवी ।

ध्यायेच्च तुलसीं देवीं श्यामां कमललोचनाम् ।
प्रसन्नां पद्मकल्हारवराभयचतुर्भुजाम् ॥
किरीटहारकेयूरकुण्डलादिविभूषिताम् ।
धवलांशुकसंयुक्तां पद्मासननिषेदुषीम् ॥

(तुलसीमाहात्म्ये ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## अश्वारूढदेवी ।

अश्वारूढा कराग्रे नवकनकमयीं वेत्रयष्टिं दधाना
दक्षे वामेऽपि चैवं खलिनतनुलतापाशबद्धा सुसाध्या ।
देवी नित्यं प्रसन्ना शशधरविलसत्केशपाशा त्रिनेत्रा
दद्यादद्यानवद्या सकलसुखकुलप्राप्तिहृद्यां श्रियं नः ॥

## भुवनेश्वरी ।

उद्यद्भास्वत्समाभां विजितनवजपामिन्दुखण्डावनद्धां
ज्योतिर्मालां त्रिनेत्रां विविधमणिलसत्कुण्डलां पद्मसंस्थाम् ।
हारग्रैवेयकाञ्चीमणिगणवलयैस्संयुतामम्बराढ्यां
मायां पाशाङ्कुशाभ्यामभयवरकरां भावयेद्भौवनेशीम् ।

(महालक्ष्मीरत्नकोशे ॥)

## बाला ।

जपाकुसुमसङ्काशा फुल्लपद्मासनस्थिता ।
अक्षस्रक्पुस्तकाभीतिवरहस्ता तु बालिका ॥

(त्रिपुरसुन्दरीकल्पे ॥)

## राजमातङ्गी ।

रत्नासनां श्यामगात्रीं शृण्वतीं शुकजल्पितम् ।
अब्जन्यस्तैकचरणां चारुचन्द्रावतंसकाम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

वीणामालापयन्तीं च तिलकोद्भासिफालकाम् ।
सौगन्धिकस्त्रक्कलिकाचूलिकां रक्तवाससम् ॥
विभूषणैर्भूषितां च मातङ्गीं प्रणमाम्यहम् ।

(राजमातङ्गीकल्पे ॥)

लक्ष्मीः ।

लक्ष्मीः पद्मासनासीना द्विभुजा काञ्चनप्रभा ।
हेमरत्नोज्वलैर्नक्रकुण्डलैः कर्णमण्डिता ॥
सुयौवना सुरम्याङ्गी कुञ्चितभ्रूसमन्विता ।
रक्ताक्षी पीनगण्डा च कञ्चुकाच्छादितस्तनी ॥
शिरसो मण्डनं शङ्खचक्रसीमन्तपङ्कजम् ।
अम्बुजं दक्षिणे हस्ते वामे श्रीफलमिष्यते ॥
सुमध्या विपुलश्रोणी शोभनाम्बरवेष्टिता ।
मेखला कटिसूत्रं च सर्वाभरणभूषिता ॥

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

श्रियं देवीं प्रवक्ष्यामि नवयौवनशालिनीम् ।
सुलोचनां चारुवक्त्रां गौराङ्गीमरुणाधराम् ॥
सीमन्तं बिबुधीशीवो (?) मणिकुण्डलधारिणीम् ।
श्रीफलं दक्षिणे पाणौ वामे पद्मं तु बिभ्रतीम् ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पद्मे पद्मां समासीनां श्वेतवस्त्रविभूषिताम् ।
कञ्चुकाबद्धगात्रीं च मुक्ताहारविभूषिताम् ॥
चामरैर्वीज्यमानां च योषिद्भ्यां पार्श्वयोर्द्वयोः ।
समानैस्स्नाप्यमानां च भृङ्गारसलिलोत्करैः ॥
(शिल्परत्नसंयोजिते कस्मिंश्चिद् ग्रन्थे ॥)

हरेस्समीपे कर्तव्या लक्ष्मीस्तु द्विभुजा नृप ! ।
दिव्यरूपाम्बरधरा सर्वाभरणभूषिता ॥
गौरी शुक्लाम्बरा देवी रूपेणाप्रतिमा भुवि ।
पृथक्चतुर्भुजा कार्या देवी सिंहासना शुभा ॥
सिंहासनस्थं कर्तव्यं कमलं चारुकर्णिकम् ।
अष्टपत्रं महाभाग ! कर्णिकायां तु सा स्थिता ॥
विनायकवदासीना देवी कार्या महाभुजा ।
बृहन्नालं करे कार्यं तस्याश्च कमलं शुभम् ॥
दक्षिणे यादवश्रेष्ठ ! केयूरप्रान्तसंस्थितम् ।
वामेऽमृतघटः कार्यस्तथा राजन् ! मनोहरः ॥
तस्याश्च द्वौ करौ कार्यौ बिल्वशङ्खधरौ द्विज ! ।
आवर्जितघटं कार्यं तत्पृष्ठे कुञ्जरद्वयम् ॥
देव्याश्च मस्तके पद्मं तथा कार्यं मनोहरम् ।
(हेमाद्रिव्रतखण्डे विष्णुध० ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पद्मपत्रासनासीना पद्माभा पद्महस्तिनी ।
हेमरत्नोज्ज्वलं नक्रकुण्डलं कर्णमण्डनम् ॥

चन्द्रबिम्बामलमुखी कर्णपूर्णायतेक्षणी ।
सुयौवना सुरम्याङ्गी कुञ्चितभ्रूसविभ्रमा ॥

रक्तोष्ठी पीनगण्डा च कञ्चुकाच्छादितस्तनी ।
शिरसो मण्डनं शङ्खचक्रसीमान्तपङ्कजम् ॥

नागहस्तसमौ बाहू केयूरकटकोज्ज्वलौ ।
पङ्कजं श्रीफलं चैव वामके दक्षिणेऽपि च ॥

शोभनाम्बरसंपन्ना श्रोणी च विपुला मता ।
मेखलाकटिसूत्राङ्गा लक्ष्मीर्लक्ष्मीविवर्धनी ॥

(पूर्वकारणागमे द्वादशपटले ॥)

अष्टपत्राम्बुजस्योर्ध्वे लक्ष्मीस्सिंहासने शुभे ।
बिनायकवदासीना सर्वाभरणभूषिता ॥

ऊर्ध्वं हस्तौ प्रकर्तव्यौ देव्याः पङ्कजधारिणौ ।
वामेऽमृतघटं धत्ते दक्षिणे मातुलिङ्गकम् ॥

(रूपमण्डने ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

श्रीः ।

पद्मस्था पद्महस्ता च गजोत्क्षिप्तघटप्लुता ।
श्रीः पद्ममालिनी चैव कालिकाकृतिरेव च ॥

(हेमाद्रिव्रतखण्डे विष्णुध० ॥)

महालक्ष्मीः ।

कोल्हापुरं विनान्यत्र महालक्ष्मीर्यदोच्यते ।
लक्ष्मीवत्सा तदा कार्या रूपाभरणभूषिता ॥
दक्षिणाधःकरे पात्रमूर्ध्वे कौमोदकीं ततः ।
वामोर्ध्वे खेटकं धत्ते श्रीफलं तदधःकरे ॥
बिभ्रती मस्तके लिङ्गं पूजनीया विभूतये ।

(विश्वकर्मशास्त्रे ॥)

अक्षस्रक्परशुं गदेषुकुलिशं पद्मं धनुः कुण्डिकां
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां
सेवे सैरिभमर्दनीमिहमहालक्ष्मीं सरोजस्थिताम् ॥

(चण्डीकल्पे ॥)

सरस्वती ।

सरस्वती चतुर्हस्ता श्वेतपद्मासनान्विता ।
जटामकुटसंयुक्ता शुक्लवर्णा सितांबरा ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

यज्ञोपवीतसंयुक्ता रत्नकुण्डलमण्डिता ।
व्याख्यानं चाक्षसूत्रं च दक्षिणे तु करद्वये ॥

पुस्तकं पुण्डरीकं च[1] त्रिनेत्रा चारुरूपिणी ।
ऋग्व्यागता कृतास्सर्वे[2] मुनिभिस्सेविता वरा ॥

एवं लक्षणसंयुक्ता वाग्देवी परिकीर्तिता ।

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

देवी सरस्वती कार्या सर्वाभरणभूषिता ।
चतुर्भुजा सा कर्तव्या तथैव च समुत्थिता ॥

पुस्तकं चाक्षमाला च तस्या दक्षिणहस्तयोः ।
वामयोश्च तथा कार्या वैणवी च कमण्डलुः ॥

समपादप्रतिष्ठा च कार्या सौम्यमुखी तथा ।

(हेमाद्रिव्रतखण्डे विष्णुध० ॥)

श्वेतपद्मासनासीनां शुक्लवर्णां चतुर्भुजाम् ।
जटामकुटसंयुक्तां मुक्ताकुण्डलमण्डिताम् ॥

---

१. 'पुस्तकं कुण्डिका चापी'ति पाठान्तरम्। २. 'ऋग्यजुस्सामभिदतेने'ति पाठान्तरम्। 'भिदतेने'त्यंशो गीतेनेति स्यात् ।



18

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

### प्रतिमालक्षणानि ।

यज्ञोपवीतिनीं हारमुक्ताभरणभूषिताम् ।
दुकूलवसनां देवीं नेत्रत्रयसमन्विताम् ॥
सदशं १ दक्षिणे हस्ते वामहस्ते तु पुस्तकम् ।
दक्षिणे चाक्षमाला च करकं वामके करे ॥
वागीश्याकृतिराख्याता दुर्गायाकृतिरुच्यते ।

(पूर्वकारणागमे द्वादशपटले ॥)

जटाजूटधरा शुद्धा चन्द्रार्धकृतशेखरा ।
पुण्डरीकसमासीना नीलग्रीवा त्रिलोचना ॥

(स्कान्दपुराणे सूतसंहितायाम् ॥)

एकवक्त्रा चतुर्हस्ता मुकुटेन विराजिता ।
प्रभामण्डलसंयुक्ता कुण्डलान्वितशेखरा ॥
अक्षाब्जवीणापुस्तकं महाविद्या प्रकीर्तिता ।
वराक्षाब्जं पुस्तकं च सरस्वती शुभावहा ॥

(रूपमण्डने ॥)

### भूमिः ।

सस्याङ्कुरनिभा भूमिर्नीलालकसमन्विता ।
करण्डमकुटोपेता सर्वाभरणभूषिता ॥

---

१. सुदण्डमिति श्रीतत्वनिधिपाठः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

पीताम्बरधरा चैव प्रसन्नवदनान्विता ।
पद्मं वाप्युत्पलं वाथ उभयोर्हस्तयोर्धृतम् ॥
पद्मपीठोपरिष्ठात्तु आसीना वा स्थितापि वा ।

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

शुक्लवर्णा मही कार्या दिव्याभरणभूषिता ।
चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशाम्बरा ॥
रत्नपात्रं सस्यपात्रं पात्रमोषधिसंयुतम् ।
पद्मं करे च कर्तव्यं भुवो यादवनन्दन! ॥
दिग्गजानां चतुर्णां च कार्या पृष्ठगता तथा ।
सर्वौषाधियुता देवी शुक्लवर्णा ततस्स्मृता ॥

(विष्णुधर्मोत्तरे ॥)

श्यामवर्णनिभा भास्वद्राजीवसमलोचना ।
हेमयज्ञोपवीता च द्विभुजा च द्विनेत्रका ॥
सर्वाभरणसंयुक्ता करण्डमकुटान्विता ।
रक्ताम्बरधरा चैव दक्षहस्तोत्पलान्विता ॥
धरण्याकृतिरेवं स्याज्ज्येष्ठायाकृतिरुच्यते ।

(पूर्वकारणागमे द्वादशपटले ॥)

---



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# सप्तमातरः।

सप्तमातरः ।

अथातस्संप्रवक्ष्यामि मातॄणां स्थापनं परम् ।
नैर्ऋतस्य वधार्थाय ब्रह्मणा चापि निर्मिताः ॥

ब्रह्माणीं ब्रह्मवत्कुर्यान्महेशीमीश्वरोपमाम् ।
कुमारवच्च कौमारीं विष्णुवद्वैष्णवीं तथा ॥

क्रोधाननां तु वाराहीं वामनीं तु हलायुधाम् ।
शक्राणीं शक्रवत्कुर्याच्चामुण्डीमुग्ररूपिणीम् ॥

सुविकीर्णजटाभारां श्यामवर्णां चतुर्भुजाम् ।
कपालशूलहस्तां च चामुण्डीं कारयेत्ततः ॥

वरदाभयहस्तास्तु तत्तदायुधधारिणः ।
तत्तद्वर्णसमायुक्ता वाहनध्वजसंयुताः ॥

चतुर्भुजास्तु सर्वाश्च नलिनासनसंस्थिताः ।

(सुप्रभेदागमे द्विचत्वारिंशत्तमपटले ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ब्रह्मेशगुहविष्णूनां तथेन्द्रस्य च शक्तयः ।
शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥

यस्य देवस्य यद्रूपं यथाभूषणवाहनम् ।
तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ ॥

हंसयुक्तविमानाग्रे साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥

माहेश्वरी वृषारूढा त्रिशूलवरधारिणी ।
महाहिवलया प्राप्ता चन्द्ररेखाविभूषणा ॥

कौमारी शक्तिहस्ता च मयूरवरवाहना ।
योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी ॥

तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता ।
शङ्खचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥

यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः ।
शक्तिस्साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥

नारसिंही नृसिंहस्य बिभ्रती सदृशं वपुः ।
प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥

वज्रहस्ता तथैवैन्द्री गजराजोपरिस्थिता ।
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

ततः परिवृतस्ताभिरीशानो देवशक्तिभिः ।
हन्यन्तामसुराश्शीघ्रं मम प्रीत्याह चण्डिकाम् ॥

ततो देवीशरीरात्तु विनिष्क्रान्तातिभीषणा ।
चण्डिका शक्तिरत्युग्रा शिवाशतनिनादिनी ॥

(इति मार्कण्डेयपुराणे ॥)

## ब्राह्मी ।

चतुर्वक्त्रा चतुर्बाहुसंयुक्ता हेमसन्निभा ।
दक्षिणेऽभयशूलं च वरदं चाक्षमालिका ॥

रक्तपद्मासनासीनां हंसवाहनकेतुकाम् ।
जटामकुटसंयुक्तां पीताम्बरधरां वराम् ॥

ब्रह्माणीं ह्येवमाख्यातां ब्रह्मवृक्षसमाश्रिताम् ।

(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ॥)

तत्र ब्राह्मी चतुर्वक्त्रा षड्भुजा हंससंस्थिता ।
पिङ्गला भूषणोपेता मृगचर्मोत्तरीयका ॥

वरं सूत्रं स्रुवं धत्ते दक्षबाहुत्रये क्रमात् ।
वामे तु पुस्तकं कुण्डीं बिभ्रती चाभयप्रदा ॥

(विष्णुधर्मोत्तरे ॥)





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

चतुर्भुजा विशालाक्षी तप्तकाञ्चनसन्निभा ।
वरदाभयहस्ता च कमण्डल्वक्षमालिका ॥
हंसध्वजा हंसरूढा जटामकुटधारिणी ।
रक्तपद्मासनासीना ब्रह्माणी ब्रह्मरूपिणी ॥

(पूर्वकारणागमे द्वादशपटले ॥)

ब्रह्माणी हंसमारूढा साक्षसूत्रकमण्डलुः ।
स्रुचं तु पुस्तकं धत्ते ऊर्ध्वहस्तद्वये शुभा ॥

(रूपमण्डने ॥)

## माहेश्वरी ।

चतुर्भुजा त्रिनेत्रा च अतिरक्तसमप्रभा ।
शूलाभयकरा सव्ये वामे वरदसंयुता ॥
जपमालासमायुक्ता जटामकुटसंयुता ।
ईश्वरेणोपमा ह्येषा शिवा माहेश्वरी स्मृता ॥

(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ॥)

माहेश्वरी वृषारूढा पञ्चवक्त्रा त्रिलोचना ।
शुक्लेन्दुभृज्जटाजूटा शुक्ला सर्वसुखप्रदा ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

षड्भुजा वरदा दक्षे सूत्रं डमरुकं तथा ।
शूलघण्टाभयं वामे सैव धत्ते महाभुजा ॥

(विष्णुधर्मोत्तरे ॥)

त्रिनेत्रा शुक्लवर्णा च शूलपाणिर्वृषध्वजा ।
वरदाभयहस्ता च साक्षमालकरान्विता ॥
जटामकुटिनी शम्भोर्भूषणी सा महेश्वरी ।

(पूर्वकारणागमे द्वादशपटले ॥)

माहेश्वरी प्रकर्तव्या वृषभासनसंस्थिता ।
कपालशूलखट्वाङ्गवरहस्ता चतुर्भुजा ॥

(रूपमण्डने ॥)

## कौमारी ।

चतुर्भुजा त्रिनेत्रा च रक्तवस्त्रसमन्विता ।
सर्वाभरणसंयुक्ता वाचिकावद्धमाकुटी (?) ॥
शक्तिकुक्कुटहस्ता च वरदाभयपाणिनी ।
मयूरध्वजवाही स्यादुदुम्बरद्रुमाश्रिता ॥
कौमारी चेति विख्याता सर्वकामफलप्रदा ।

(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

कौमारी रक्तवर्णा स्यात् षड्वक्त्रा सार्कलोचना ।
रविबाहुर्मयूरस्था वरदा शक्तिधारिणी ॥

पताकां बिभ्रती दण्डं पात्रं बाणं च दक्षिणे ।
वामे चापमथो घण्टां कमलं कुक्कुटं त्वधः ॥
परशुं बिभ्रती तीक्ष्णं तदधस्त्वभयान्विता ।

(विष्णुधर्मोत्तरे ॥)

कौमारी चैव कर्तव्या मयूरासनशक्तिभृत् ।
त्रिदण्डी कालरूपा च रक्तमाल्या सकुक्कुटा ॥

(देवीपुराणे ॥)

कुमारसदृशा कन्या वर्णवाहनकेतुभिः ।
वासिकाबद्धमकुटा (?) शक्तिकाङ्कुशधारिणी ॥
रक्तवस्त्रा महावीर्या हारकेयूरभूषणी ।
वरदाभयहस्ता च कौमारी कुङ्कुमप्रभा ॥

(पूर्वकारणागमे द्वादशपटले ॥)

कुमाररूपा कौमारी मयूरवरवाहना ।
रक्तवस्त्रधरा तद्वच्छूलशक्तिगदाधरा ॥

(रूपमण्डने ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## वैष्णवी ।

शङ्खचक्रधरा देवी वरदाभयपाणिनी ।
सुस्तना चारुवदना श्यामाभा च सुलोचना ॥
पीताम्बरधरा देवी किरीटमकुटान्विता ।
राजवृक्षं समाश्रित्य गरुडध्वजवाहिनी ॥
वैष्णवी पीठगा देवं (?) विष्णुभूषणभूषिता ।
(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ॥)

वैष्णवी तार्क्ष्यगा श्यामा षड्भुजा वनमालिनी ।
वरदा गदिनी दक्षे बिभ्रती चाम्बुजस्रजम् ॥
शङ्खचक्राभयान्वामे सा चेयं विलसद्भुजा ।
(विष्णुधर्मोत्तरे ॥)

सुसिद्धा वैष्णवी कार्या शङ्खचक्रगदाम्बुजा ।
वनमालाकृतापीडा पीतवस्त्रा सुशोभिता ॥
(देवीपुराणे ॥)

पद्मपत्रविशालाक्षी श्यामवर्णा महाबला ।
शङ्खचक्रगदापद्मधरबाहुचतुष्टयी ॥
गरुडध्वजसंयुक्ता वैष्णवी विष्णुभूषणी ।
(पूर्वकारणागमे द्वादशपटले ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

वैष्णवी विष्णुसदृशी गरुडोपरि संस्थिता ।
चतुर्बाहुश्च वरदा शङ्खचक्रगदाधरा ॥

(रूपमण्डने ।।)

वाराही ।

वराहवक्त्रसदृशा प्रलयाम्बुदसन्निभा ।
करण्डमकुटोपेता विद्रुमाभरणान्विता ॥
हलं च वरदं सव्ये वामे अभयशक्तिके ।
कल्पद्रुमं समाश्रित्य गजध्वजसवाहिनीम् ॥
वाराही चेति विख्याता नाम्ना सर्वफलप्रदा ।

(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ।।)

कृष्णवर्णा तु वाराही सूकरास्या महोदरी ।
वरदा दण्डिनी खड्गं बिभ्रती दक्षिणे सदा ॥
खेटपाशाभयान्वामे सैव चापि लसद्भुजा ।

(विष्णुधर्मोत्तरे ।।)

कृष्णा पीताम्बरा शार्ङ्गी सर्वसम्पत्करी नृणाम् ।
पवित्रालङ्कृतोरस्का पादनूपुरसंयुता ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

सव्येऽभयहलं चैव मुसलं वर(द)मन्यके ।
वराहवक्त्री वाराही यमभूषणभूषणी ॥

(पूर्वकारणागमे द्वादशपटले ॥)

वाराहीं तु प्रवक्ष्यामि महिषोपरि संस्थिता ।
वराहसदृशी देवी घण्टाचामरधारिणी ॥
गदाचक्रधरा तद्वद्दानवेन्द्रविघातिनी ।
तोकानां च हितार्थाय सर्वव्याधिविनाशिनी ॥

(रूपमण्डने ॥)

वैवस्वती प्रकर्तव्यां दुर्द्धरा महिषोपरि ।
सूंकरास्या कपालेऽसृक् पिबन्ती दण्डधारिणी ॥

(देवीपुराणे ॥)

## चामुण्डा

चतुर्भुजा त्रिनेत्रा च रक्तवर्णोर्ध्वकेशिका ।
कपालशूलहस्ता च वरदाभयपाणिनी ॥
शिरोमालोपवीता च पद्मपीठोपरि स्थिता ।
व्याघ्रचर्माम्बरधरा वटवृक्षसमाश्रिता ॥



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

चामुण्डीलक्षणं ह्येवमेकबेरे च तत्समम् ।
वामपादस्थिता स्सर्वास्सव्यपादप्रलम्बिताः ॥

(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ॥)

चामुण्डा प्रेतगा रक्ता विकृतास्याहिभूषणा ।
दंष्ट्रोग्रा क्षीणदेहा च गर्ताक्षी भीमरूपिणी ॥
दिग्बाहुः क्षामकुक्षिश्च मुसलं कवचं शरम् ।
अङ्कुशं बिभ्रती खड्गं दक्षिणे त्वथ वामतः ॥
खेटं पाशं धनुर्दण्डं कुठारं चेति बिभ्रती ।

(विष्णुधर्मोत्तरे ॥)

दीर्घजिह्वोर्ध्वकेशा च कृष्णका कृष्णदंष्ट्रिका ।
निर्मांसा व्यावृतमुखी चण्डी खण्डेन्दुमण्डिता ॥
काली कपालमाला च शवारूढा कृशोदरी ।
कौशिकारोहिणी वासौ चामुण्डा गृध्रकेतुका ॥
मांसखण्डसुसंपूर्णं कपालं वामपाणिभाक् ।
शूलाही दक्षिणे चैव वह्निर्वामकरस्थकः ॥
व्याघ्रचर्माम्बरा काली त्रिनेत्री शङ्खकुण्डली ।
लोकानां मातरस्सप्तमातरः कथिता इमाः ॥

(पूर्वकारणागमे द्वादशपटले ॥)



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## इन्द्राणी ।

चतुर्भुजा त्रिनेत्रा च रक्तवर्णा किरीटिनी ।
शक्तिवज्रधरा चैव वरदाभयपाणिनी ॥

सर्वाभरणसंयुक्ता गजध्वजसवाहिनी ।
इन्द्राणी चेति विख्याता कल्पद्रुमसमाश्रिता ॥

(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ॥)

ऐन्द्री सहस्रदृक्सौम्या हेमाभा गजसंस्थिता ।
वरदा सूत्रिणी वज्रं बिभ्रत्यूर्ध्वं तु दक्षिणे ॥

वामे तु कलशं[1] पात्रं त्वभयं तदधःकरे

(विष्णुधर्मोत्तरे ॥)

एन्द्री सुरवराध्यक्षा गजराजोपरि स्थिता ।
वज्राङ्कुशधरा देवी हारकेयूरभूषिता ॥

(देवीपुराणे ॥)

वज्रहस्ता गजारूढा लोचनद्वयसंयुता ।
वस्त्रालङ्कारसंपन्ना गजेन्द्रध्वजवाहना ॥

वरदाभयशक्त्याप्तबाहुकेन्दु[2] प्रकीर्तिता ।

(पूर्वकारणागमे द्वादशपटले ॥)

---

१. कमंलमिति श्रीतत्त्वनिधिपाठः । २. बाहुकैन्द्रीति स्यात् ।





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

इन्द्राणी चेन्द्रसदृशी वज्रशूलगदाधरा ।
गजासनगता देवी लोचनैर्बहुभिर्वृता ॥

(रूपमण्डने ॥)

वीरभद्रलक्षणम् ।

चतुर्भुजं त्रिनेत्रं च जटामकुटमण्डितम् ।
सर्वाभरणसंयुक्तं श्वेतवर्णं वृषध्वजम् ॥

शूलं चाभयहस्तं च दक्षिणे तु करद्वयम् ।
गदावरदहस्तं च वामपार्श्वे करद्वयम् ॥

श्वेतपद्मासनासीनं वटवृक्षसमाश्रितम् ।
वीरभद्रमिति ख्यातं ब्राह्मीरूपं ततः शृणु ॥

(अंशुमद्भेदागमे सप्तचत्वारिंशपटले ॥)

वीरेश्वरश्च भगवान्वृषारूढो धनुर्धरः ।
वीणाहस्तत्रिशूला[1] च मातृणामग्रतो भवेत् ॥

मध्ये च मातरः कार्या अन्ते तेषां विनायकः ।

(रूपमण्डने ॥)

---

१. वीणात्रिशूलहस्तश्चेति स्यात् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# ज्येष्ठा ।

## ज्येष्ठा ।

द्विभुजाञ्जनसङ्काशा लम्बोष्ठा तुङ्गनासिका ।
लम्बमानस्तना कुक्षौ नीलं वा रक्तवाससी ॥

उत्पलं दक्षिणे हस्ते पीठे वामकरस्थितः[१] ।
भद्रपीठस्थिता वापि द्विपादं चैवं लम्बिनि[२] ॥

सर्वाभरणसंयुक्ता वाचिकाबद्धमाकुटी (?) ।
काकध्वजसमायुक्ता सालका तिलकान्विता ॥

तस्या दक्षिणपार्श्वे तु वृषो वै वृषवाहना[३] ।
द्विभुजो दक्षिणे हस्ते दण्डं वामे तु सूत्रकम्[४] ॥

लम्बयेद्दक्षिणं पादं वाममुत्कुटिकासनम् ।
श्वेतवर्णमहाकाया सर्वाभरणभूषिता ॥

---

१. 'वामे तु करकं न्यसेदि'ति पाठान्तरम् । २. लम्बितामिति स्यात् । ३. 'वृषास्यं वृषभं तथे' ति सुप्रभेदवचनानुसारेण वृषभानन इति स्यात् । एतदारभ्य दुकूलवसनान्वितेत्यन्तानां सर्वेषामपि विशेषणानां वृषान्वयौचित्या-सुल्लिङ्गतया विपरिणामस्समीचीनः । ४. सूचिभृगिति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

किरीटमकुटोपेता दुकूलवसनान्विता ।
वृषं वै दक्षिणे त्वेवं वामे त्वग्निमथोच्यते ॥

सुस्तना यौवनाङ्गा च सर्वाभरणभूषिता ।
कृष्णाञ्जननिभा रक्तवस्त्रेणैव तु भूषिता ॥

करण्डमकुटा द्व्यक्षी वामप........न्विता ।
सव्येनोत्कुटिकासीना हस्तादुत्पलधारिणी[1] ॥

(अंशुमद्भेदागमे एकोनपञ्चाशपटले ॥)

अथातस्संप्रवक्ष्यामि ज्येष्ठायास्स्थापनं परम् ।
आदिशक्तेस्समुत्पन्ना पश्चादुदधिसंभवा ॥

उदधौ मथ्यमाने तु चोत्थिता सा गजानन ! ।
कालाञ्जननिभा देवी सर्वाभरणभूषिता ॥

कररूढा कलेपत्नी सुखस्ना दुहितातनुः[2] ।
जानुपार्श्वे मणिर्वाथ वृषास्यं वृषभं तथा ॥

वृषभो रक्तवर्णस्तु मणिः काञ्चनसप्रभा ।
रूपाण्येतानि कृत्वा तु प्रतिष्ठां सम्यगाचरेत् ॥

(सुप्रभेदागमे पञ्चचत्वारिंशपटले ॥)

---

१. एतत्पद्यमादर्शान्तरे न । २. 'खरारूढा कलेः पत्नी सुखासीना हिता तनु' रिति पाठान्तरम् ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

तुङ्गनासा च लम्बोष्ठी लम्बमानस्तनोदरी ।
आलोहिता स्मृता ह्येषा ज्येष्ठाऽलक्ष्मीरिति श्रिये ॥

उत्पलाभयहस्तेयं द्विभुजा वीरवन्दिता ।

(विष्णुधर्मोत्तरे ॥)

पीनोर्वी[1] पीनगण्डा च पीनस्तनभरोदरी ।
नीलकालकसीमन्ता सधम्मिल्लशिरोरुहा ॥

स्निग्धाञ्जननिभा रक्ता बिम्बोष्ठी तुङ्गनासिका ।
द्विभुजा च द्विनेत्रा च कुमुदं दक्षिणे करे ॥

कन्यापुत्रान्विता देवी दक्षिणेऽदक्षिणेऽपि च ।
देव्या बाहुसमं कुर्यात् कन्यकापुत्रकौ क्रमात् ॥

पुत्रो वृषभवक्त्रस्तु द्विभुजौ च द्विनेत्रकौ ।
ज्येष्ठाया आकृतिर्ह्येवं पद्मजाकृतिरुच्यते ॥

(पूर्वकारणागमे द्वादशपटले ॥)

ज्येष्ठाभेदः ।

रक्तज्येष्ठा च नीला च भूतलार्पितपादका ।
भूतलं स्पृशते दोर्भ्यां द्विभुजा वीरवन्दिता ॥

(विष्णुधर्मोत्तरे ॥)

---

१. 'पीनोरू'रित्यर्थः ।



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

சேட்டையின் பெயர்—முகடி தௌவை கலதி மூதேவி
காக்கைக்கொடியாள் கழுதைவாகனி சேட்டை
கெடலணங்கு சேட்டை பெயரே.

(சேந்தன் திவாகரம், தெய்வப்பெயர்தொகுதி.)

மூதேவியின்பெயர்—கழுதையூர்தி காக்கைக்கொடி
யாண்முகடி தௌவை கலதி மூதேவி.

மற்று மூதேவியின் பெயர்—சீர்கேடி கேட்டை கெட
லணங்கேகவேணி சேட்டையென விளம்புவர்.

மூதேவியூர்தி படை கொடியின் பெயர்—வாகனங்
கழுதை படைதுடைப்பங் காகங்கொடியெனக்
கழறல் வேண்டும்.

(பிங்கலநிகண்டு, பெயர்பிரிவு வானவர்வகை.)

சேட்டை யிந்திரைக்கு மூத்தாள் சீர்கேடி சிறப்பிலாதா
ளீட்டிய வேகவேணி நெடுங்காகத்துவசமுற்றுள்
கேட்டையே கெடலணங்கு கழுதைவாகனி கேடெல்லா
மூட்டிய கலதி தௌவை முகடி மூதேவியாமே.

(சூடாமணிநிகண்டு, தெய்வப்பெயர்த்தொகுதி)

शुभमस्तु



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# INDEX.



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## INDEX.



CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA.

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

## INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# INDEX TO APPENDIX B.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# INDEX.





CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

INDEX.



पुस्तकालय
गुरुकुल कांगड़ी विश्वविद्यालय
हरिद्वार

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

# CONTENTS OF THE SECOND VOLUME.




पुस्तकालय
गुरुकुल कांगड़ी विश्वविद्यालय
हरिद्वार

CC-0. Gurukul Kangri University Haridwar Collection. Digitized by S3 Foundation USA

